

# सर्वतन्त्रसिद्धान्तपदार्थलक्षण संग्रहः

केनचिद्भिक्षुगौरीशङ्करेण

संगृहीतः ।

—:०:—

प्रथमावृत्तिः ।

विक्रमाब्दाः १९७९

पुस्तकप्राप्तिस्थानम्—

ग्राम पुट्ठीदेवीमनभरी पोष्टजमालपुर जि० हिसार।

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press*
*Benares.*

---

*1922*

मूल्यम् ॥=) आना

# भूमिका।

श्रीमत्सूत्रकारान् भाष्यकारांस्तथा तदनुसारिणः पूर्वाचार्य्यान् भूयो भूयो नमस्कृत्य स्वल्पभूमिका वर्ण्यते।

इमं ग्रन्थं ये जनाः पठिष्यन्ति तान्प्रति मम सविनयं प्रार्थनास्ति, ते जना इमं ग्रन्थं निजवासनापरवशेन न पश्यन्तु किन्तु शास्त्रानुसारविचारं कुर्युस्तदा तेषां सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहनिरीक्षणंसफलं भविष्यतीति।

यद्यप्यस्य सर्वतन्त्रसिद्धान्तपदार्थलक्षसंग्रहस्य प्रकाशो मम लेखनीद्वारा एकवारं पूर्णतया श्रीभागीरथीतटेऽभूदेव, तथापि योऽयं ममाभिलाष आसीत्, यदयं ग्रन्थः शतसहस्रधा भूत्वा देशदेशान्तरवर्त्यनेकविद्वद्वृन्ददृष्टिगोचरो भूत्वा पवित्रं भवेत्तथा विद्याभिलाषिणां विद्यार्थिगणानां स्वल्पव्ययेन मित्रं भवेदिति। तत्पूर्तिर्हिमच्छक्त्यतिक्रमणीयाऽऽसीत्, तदस्य ग्रन्थस्य लेखने चिरकालं महात्मनां परिश्रमं ज्ञात्वा हिसारा-

स्थनगरनिवासिन्या वैश्यधर्मावलम्बिन्यास-
ज्जनसाधुष्वत्यन्तश्रद्धाभक्तिशीलया श्रीम-
त्या मनभर्याख्यया देव्या सज्जनपुरुषाणां
सुखेन प्राप्त्यर्थं मम संकल्पानुसारं मुद्राप-
णार्थं प्रार्थनाऽकारि, तदस्मदीयाऽऽज्ञानुसारं
साधुजनेभ्यो योग्याधिकारिभ्यश्च धर्मार्थवि-
तरणार्थं न्यायोपार्जितनिजद्रव्यव्ययेनेमं मु-
द्रापयित्वा प्रदानं कृतं वैक्रमीये १९७९ संव-
त्सरे । लोके चैतादृशा जनाः स्वधर्मस्थि-
ताः सद्ग्रन्थप्रवर्तका दुर्लभाः सन्ति । कि-
ञ्चान्नादि दातारो बहवः सन्ति परं त्वन्नादि
गृहीतॄणां केवलं शारीरकमेव स्वल्पसुखला-
भो भवति सद्ग्रन्थेभ्यो धर्मज्ञानोपलब्धिद्वारा-
ऽक्षयात्मसुखमपि लभन्ते, अतः सर्वदानेभ्यः
सच्छास्त्रप्रदानेनाधिकतरं फलं भवति ।

अत्र कदाचिद्दृष्टिदोषेण सीसकाक्षर-
भङ्गाद्वा यदि कुत्रचित्स्थानेऽशुद्धिरस्ति सा
सदयीभूय सुजनैः क्षन्तव्या ।

इति शिवम् ॥

# सङ्केतः ।

सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहस्य साङ्केतिकवर्णचिह्नादीनां विवरणम् ।

एतत्पुस्तकस्य प्रत्येकपृष्ठे लक्षणादिलिखितम् । तस्यान्तिमलक्षणादेर्वर्णं द्व्यक्षरपर्यन्तं विन्यस्तमभवत् । तद्दृष्टिमात्रेण यदक्षरपर्यन्तं लक्षणंतत्पृष्ठारूढीभूतं तद्बोधोभविष्यति । तेनेष्टलक्षणानामनायासेन लाभो भविष्यति ।

| | | | |
|---|---|---|---|
| अ० | अद्वैतग्रन्थे / अद्वैतमते | म० | मतान्तरे |
| आ० | आदर्शे | मी० | मीमांसकाः |
| ग्रं० | ग्रन्थान्तरे | यो० | योगग्रन्थे / योगमते |
| नै० | नैयायिकाः | वे० | वेदान्तग्रन्थे / वेदान्तमते |
| न्या० | न्यायग्रन्थे / न्यायमते | सां | साङ्ख्यग्रन्थे / साङ्ख्यमते |
| पु० | पुस्तकान्तरे | | |

इत्यक्षरस्य ग्रहणं कृतम् ।

तत्तद्ग्रन्थनामानिविस्तरभिया नोक्तानि । समानार्थकद्विव्यादिशब्देष्वेकस्थले पिण्डस्थ·

## सङ्केतः

तेषु तदुत्तरं तज्ज्ञापकं एवं प्रकारं वेष्टन चिह्नं(   )दत्तम् ।

विशेषलक्षणसमापनात् परं विशेषलक्षणारम्भात्पूर्वञ्च पुष्पाकारचिह्नं* कृतम् ।

येषां प्रसिद्धैकविषयकलक्षणांलिखित्वा तत्संख्यानामङ्कपातः कृतः ।

तत्रोक्तप्रसिद्धलक्षणमेकत्वेनगणयित्वा-द्यादि संख्याङ्काः स्थापिताः ॥



ये खलु कान्ताकाञ्चनरहितास्तेभ्यो मूल्यमन्तरा निम्नलिखितस्थाने पत्रप्रेषणेनायं ग्रन्थस्तत्सेवायां प्रेषितो भविष्यतीति ।

पुस्तकप्राप्तिस्थानम्—

ग्राम पुट्ठी देवीमनभरी

पोष्टजमालपुर

जिला हिसार ॥

## प्रार्थना ।

अनेक धन्यवाद उस करुणामय जगदीश्वर को है कि जिसकी अपार कृपा से मैं ने भी सज्जन समाज के सेवा भागके भागी बननेके लिये तथा महात्माओं के वचनों कूं प्रकाश कर पुण्य विशेषके लाभके लिये आज मुझे आप सज्जन महाशयों की सेवा में इस मनोहर ग्रन्थ के भेट करने का अवसर प्राप्त हुआ है। मेरा बहुत दिनों से विचार था कि मैं भी महात्माओं की स्मृतिका विषय होऊं तथा यथा योग्योपाय भी किया परन्तु एक तो स्त्री का शरीर दूसरा शास्त्र में विशेष प्रवेश न हीं। तो भी इस अपूर्व ग्रन्थ के छपवाने करके संपूर्ण विद्वानों के कर कमलों में मैं आरूढ होऊंगी दृष्टान्त जैसे भौंरा कमल के संबन्ध से महादेवके मस्तक में आरूढ होवे हैं तैसे मैं मनभरी भी सर्व महात्मा तथा सत्संगी जनों के लाभार्थ इस पुस्तक को छपवाय के तिनों के हस्त उपरि स्थित होवांगी ॥ इति ।

श्रीमान आप अपने सर्वज्ञ ता विद्वानों कूं
सूचित करदेना कि यह पुस्तक मुफ्त
मिलेता है और समाचार अवश्य लिखना



# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः

## केनाचिद्भिक्षुगौरीशङ्करेण संगृहीतः ।

—:०:—

नमः परमर्षिभ्यः ।

त्वां विना निःस्वरूपोहं मां विना त्वं कथं स्थितः ।
दिष्ट्येदानीं मयालब्धो योऽसि सोऽसि नमोऽस्तु ते
श्रीचैतनकिङ्कराह्वश्रीमद्रामपुर्याह्वयोः ।
वन्दे पादौ तथा श्रीमद्धीरालालाह्वधीमताम् ॥२॥

१ अथ प्रारब्धुमिष्टस्य ग्रन्थस्य निर्विघ्नसमाप्तये मनस्यनुष्ठितं मङ्गलं शिष्याशिक्षार्थं ग्रन्थेप्युपनिबध्नाति **त्वां विने**त्यादिना ।

२ मन्त्रगुरुज्ञानप्रदगुरुविद्यागुरून्क्रमशो नमस्यति **श्रीचैतने**त्यादिना ।

पदवाक्यमाननिपुणा[1] निपुणं,
विमृशन्त्विदं[2] प्रकरणं[3] मनसा ।
गुणदोषनिर्णयनिमित्ततया,
प्रथिता हि पण्डितजना जगति ॥ ३ ॥
विद्वांसो यदि मम दोषमुद्गिरेयुः,
यद्वा ते गुणगणमेव कीर्तयेयुः ।
तुल्यं तद्बहु मनुते मनो मदीयं,
कष्टं तद्धन्मनुते यदाह मन्दः ॥ ४ ॥
दोषत्वमुज्ज्वलगुणा अपि यान्ति येषु,
तैरुन्नतैः किमथवेह तिरस्कृतैः किम् ।
दोषोऽपि येषु गुणतामुपयाति भूया-,
स्तेभ्यो नमोऽस्तु सततं भुवि सज्जनेभ्यः॥५॥
प्रज्ञाशब्दमयस्यास्य देहस्य मम दुर्जनाः[4] ।
दयध्वं प्रहरध्वं तु चेदिष्टं पाञ्चभौतिके ॥६॥

---

१ पदनिपुणा वैयाकरणाः, वाक्यनिपुणा मीमांसकाः, माननिपुणा नैयायिकाः ।

२ अवधानेन ।  ३ विचारयन्तु ।

४ हे दुर्जना अयं ग्रन्थो मम शब्दमयः ज्ञानमयश्च देहोऽस्ति ।

प्रमाणसिद्धान्तविरुद्धमत्र,
यत्किञ्चनाभून्मतिमांद्यदोषात् ।
मात्सर्यमुत्सार्य महानुभावाः,
प्रसादमाधाय विशोधयन्तु ॥ ७ ॥

क्व ग्रन्थकरणं क्व त्वमिति मा जानताऽऽस्तिकाः
सत्सङ्गानुग्रहः किं किं न करोत्येवमाह वाक् ॥ ८ ॥
न ख्यातिर्लाभपूजादिर्ग्रन्थकरणकारणम् ।
न विद्वत्ताबलं वाऽत्र मुक्तिरेवात्र कारणम् ॥ ९ ॥
दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि ।
विलोक्यो लक्षणग्रन्थो बुद्धिमद्भिर्द्विजोत्तमैः॥१०॥
नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति ।
क्रियते स्वीयबोधाय प्रमादः क्षम्यतां बुधैः ॥११॥
श्रद्धाधनेन संगृहीतं गौरीशङ्करभिक्षुणा ।
बोधाय वादिबाधाय विदुषां कण्ठभूषणम्॥ १२॥

ये नानाशास्त्रनिरीक्षणे
श्रमाभियस्तेभ्यो ममैषा क्रिया ।
तत्राप्यशुद्धं यदि किञ्चिदस्ति,
तच्छोधनीयं विबुधैर्न मूर्खैः ॥ १३ ॥

तर्ककान्तारचारिण्यः स्खलन्ति प्रायशो गिरः ।
तस्माद्धाति प्राज्ञा एव धर्मः सनातनः ॥ १४ ॥
मूढस्तु मूढ एवास्ति तत्त्वज्ञस्त्वस्ति तत्त्ववित् ।
तस्मादर्द्धप्रबुद्धा ये ते सन्त्यत्राधिकारिणः ॥ १५ ॥

ननु किमर्थं लक्षणसंग्रहाऽऽरम्भो लक्षणानामनुपयोगादिति चेदुच्यते, अस्ति हि महानुपयोगः । तथाहि—यथा विवाहे सलक्षणो वरो लक्षणवतीं कन्यामुपयच्छेतेति ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्,
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।

इत्यादिवचनैः स्त्रीपुंससामुद्रिक लक्षणानां विवाह उपयोगात् ।

लिङ्गं सलक्षणं पूज्यं त्यजेल्लिङ्गमलक्षणम्,
तस्मात्सर्वप्रयत्नेन लिङ्गं कुर्यात्सलक्षणम् ।

इत्यादिवचनैर्लिङ्गलक्षणानांतत्पूजादावु-

पयोगात् एवमन्येषामपि लक्षणानां यथा-सम्भवमुपयोगाद्युक्त एव लक्षणसंग्रहा-रम्भ इति।

लक्षणानामुपयोगः सायणाचार्येणापि न्यायमालायां दर्शितः तथाहि—

ऋषयोपि पदार्थानां नान्तं यान्ति पृथक्त्वशः,
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित इति

किञ्च लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्नतु प्रतिज्ञामात्रेणेति न्यायादपि पदार्थलक्ष-णमवश्यमपेक्षणीयम्। तत्र प्रमाणं विहाय-लक्षणानि निरूपयामः। प्रसङ्गात्कचिद-न्यदपि निरूपयिष्याम इति।

तत्र निखिलतान्त्रिकलक्षणानां झटिति प्राप्तये तेषामानुपूर्विं्ककाकारादिहकारान्त पञ्चाशद्वर्णानां यथाक्रमं सूचीं कृत्वा विन्यास-

समकुर्वम्। तत्र प्रथमं स्वरवर्णादिलक्षणानां परे हलवर्णादिलक्षणानां शेषे युक्ताक्षरादिलक्षणानां च वर्णक्रमेणैव यथास्थानं संस्थापनंकार्यम्। नान्या कापि सङ्गतिरपेक्षणीया इति ज्ञेयम्। प्रतिज्ञोत्तरं निरूपणीयस्य युक्तत्वादिति न्यायानुसरणमितिदिक्

अ

अकस्मात्त्वम्—कारणानधीनत्वम् ॥ १ ॥

अक्रूरत्वम् } वृथापूर्वपक्षादिकारिष्वपि शि-
मृदुत्वम् } ष्यादिष्वप्रियभाषणादिव्यति-
रेकेण बोधयितृत्वम् ॥ २ ॥

अक्षरत्वम्–वर्णस्मारकत्वे सति लिपिसन्निवेशत्वम् ॥ ३ ॥

अखण्डत्वम्–सजातीयविजातीयस्वगतभेदशून्यत्वम्। सांख्यात्मन्यतिव्याप्तिवार-

णायसजातीयेत्युक्तम्, आकाशेतिव्या-
प्तिवारणाय विजातीयेति १ यद्वा, त्रि-
विधपरिच्छेदशून्यत्वम् ॥ ८ ॥

अखण्डार्थत्वम्—अपर्यायानेकशब्दप्रकाश्यत्वे सत्यविशिष्टत्वम्। नीलोघट इत्याद्यपर्यायानेकशब्दप्रकाश्ये तादात्म्येन नीलविशिष्टे घटाद्यर्थेतिप्रसङ्गवारणार्थमविशिष्टत्वदलम्, तथा घटः कलशः कुम्भ इत्यादिपर्यायाऽनेकशब्दप्रकाश्येऽविशिष्टे घटादावतिप्रसङ्गव्युदासायापर्यायानेकशब्दप्रकाश्यत्वे सतीति विशेषणदलमिति, कल्पतरौ १. अर्थस्याखण्डार्थत्वमसंश्लि-

---

१ अपर्यायभूता ये अनेके शब्दाः सत्यज्ञानानन्दादयस्तत्प्रकाश्यत्वे सतीत्यर्थः। २ कोकिलः पिको वायसः काक इति।

ण्डत्वम् ॥ ७ ॥

वाक्यस्याखण्डार्थत्वम्—अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वम् । हस्तः कर इत्यादौ व्यभिचारवारणायापर्यायग्रहणम्, इन्द्रियव्यावृत्त्यै शब्देति, गामानयेत्यादौ व्यभिचारवारणाय संसर्गागोचरेति, वाक्याभासव्यावृत्त्यर्थं प्रमितिग्रहणमिति चित्सुख्याम् १ संसर्गानवगाहियथार्थज्ञानजनकत्वम् । राजपुरुष इत्यादौ संसर्गपरे वाक्येऽतिव्याप्तिवारणायोक्तं संसर्गानवगाहीति, तत्रैवाभेदतात्पर्यभ्रमात्पदार्थसंसर्गानवगाहि तदभेदभ्रमजनके तत्प्रसङ्गवारणाय यथार्थेतीति वे० परिभाषायाम् २ तत्प्रातिपदिकार्थ(मात्रपर्यव-

१ तत्प्रातिपदिकार्थम्—प्रकृष्टप्रकाशश्चन्द्र इति

१ प्रातिपदिकत्वम्—विभक्त्यर्थशून्यत्वे सति व्यक्तमात्रार्थत्वम् ।

साधि) त्वमिदं लक्षणं बहुपुस्तकेषु दृष्टम् ॥

अखण्डोपाधिः—अनिर्वचनीयो धर्मः १ अमपत्वेतत्वे सत्यनुगतत्वमखण्डो. ॥१२॥

अख्यातिः—स्वरूपतो विषयतश्चागृहीतभेदेनैकज्ञानम् । एकविषयानेकज्ञानेष्वतिव्याप्तिपरिहारार्थं स्वरूपपदम्, समूहालम्बनज्ञानेऽतिव्याप्तिपरिहारार्थं विषय इति विशेषणमिति न्यायमकरन्दटीकायाम् १ ख्यातेरेव (=भ्रमज्ञानस्यैव) अभाव इति प्राभाकरमते ॥ १४ ॥

अग्निहोत्रम्—आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमः ॥ १५ ॥

अङ्गत्वम्—तदीयप्रधानफलजनकव्यापार-

---

वत्तदेकमात्रवस्तुपरत्वम् ।

जनकत्वे सति तदीयप्रधानफलजनकत्व-
म् । घटादावतिव्याप्तिवारणाय सत्यन्त-
मिति तिथितत्त्वटीकायाम् १ वेदार्थज्ञानो-
पयोगित्वमिति ग्रन्थान्तरे ॥ १७ ॥

अजहल्लक्षणा—शक्यार्थापरित्यागेन तत्सं-
बन्ध्यर्थान्तरे वृत्तिः, यथा शोणो धावती-
त्यत्र शोणपदस्य शोणगुणविशिष्टेऽश्वादि-
द्रव्ये । जहल्लक्षणायामतिव्याप्तिवारणाय-
शक्यार्थापरित्यागेनेति १ शक्यार्थम-
न्तर्भाव्यत्वे सत्यर्थान्तरप्रतीतित्वमिति वे-
दान्तिमते २ लक्ष्यतावच्छेदकरूपेण ल-
क्ष्यशक्योभयबोधप्रयोजिका इति न्यायमते

अज्ञत्वम्—गुरुमुखानधीतशास्त्रत्वम् १ आ-
त्मज्ञानशून्यत्वं वा २ आत्मानं जानातीति
ज्ञः, नज्ञः, अज्ञः ॥ २२ ॥

अज्ञातत्वम्—प्रमाणजन्यज्ञानाविषयत्वम्
*१*अज्ञानाश्रयाज्ञानविषयत्वम् ॥ २४ ॥

अज्ञानम्-कार्यमात्रोपादानत्वे सति सदसद्भ्यामनिर्वचनीयम् । अविद्यासंबन्धादिवारणाय सत्यन्तम्, आत्मवारणायोत्तरदलमिति वे० तत्त्वविवेके १ अनादिभावरूपत्वे सति विज्ञाननिरास्यम् । उत्तरज्ञाननिवर्त्यपूर्वज्ञानवारणायानादिरूपेति, ज्ञानप्रागभाववारणाय वा ज्ञानाभावोऽज्ञानमित्याशङ्कानिरासार्थं भा

---

१ सदसद्भ्यामित्युपलक्षणं, सत्त्वेनासत्त्वेन सदसदुभयत्वेन ब्रह्मणो भिन्नत्वेनाभिन्नत्वेन भिन्नाऽभिन्नोभयत्वेन सावयवत्वेनानिरवयवत्वेन सावयवनिरवयवोभयत्वेन चेति नवधाऽप्यनिर्वाच्यमित्यर्थः ।

त्स्वरूपेति, आत्मन्यतिव्याप्तिवारणाय ज्ञाननिरास्यमिति तत्त्वप्रदीपिकायाम् २ मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानत्वम् । ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति मिथ्यात्वे सतीत्युक्तम्, अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धेऽतिव्याप्तिनिरासाय साक्षादिति ३ यद्वा, अनाद्युपादानत्वे सति मिथ्यात्वम् । ब्रह्मनिरासार्थं मिथ्यात्वमिति, मृदादिनिरासार्थमनादीति, प्रागभावेऽतिव्याप्तिपरिहाराय वाऽविद्यात्मनोः संबन्धनिरासार्थमुपादानत्वे सतीति भाष्यरत्नप्रभायाम् ४ निग्रहस्थाने तु परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः ॥ २९ ॥

अणुत्वम्—सूक्ष्मपदार्थत्वे सत्यारम्भकत्वम्
अतिप्रसङ्गः—यस्य बोधो यत्राभिमतस्तद-न्यस्यापि बोधप्रसङ्गः ॥ ३१ ॥
अतिव्याप्तिः—लक्ष्यैकदेशवृत्तित्वम् १. ल-क्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वं वा यथा गोः शृङ्गित्वं लक्षणं लक्ष्यगोवृत्तित्वे सत्यलक्ष्य-महिष्यादिवृत्ति ॥ ३३ ॥
अतिशयतापः—स्वाधिकतरदेवतोत्कर्षदर्श-ने जायमानस्तापः ॥ ३४ ॥
अतीन्द्रियत्वम्—लौकिकसाक्षात्कारविष-यगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवा-य्यन्यगुणत्वम् ॥ ३५ ॥
अत्यन्तनिवृत्तिः—कारणसहितकार्यनिवृ-त्तिः ॥१॥ स्वप्रतियोगिजातीयप्रागभा-वासमानाधिकरणनिवृत्तिरिति तार्किकमते

अत्यन्ताभावः-त्रैकालिकसंसर्गावच्छिन्न-प्रतियोगिताकोऽभावः। ध्वंसप्रागभाववारणाय त्रैकालिकेति, भेदवारणायसंसर्गेत्यादि ॥ ३८ ॥

अदृष्टत्वम्-विधिनिषेधजन्यत्वे सत्यतीन्द्रियत्वम् ॥ ३९ ॥

अद्वैतत्वम्-सजातीयविजातीयस्वगतभेदशून्यत्वम् ॥ ४० ॥

अधमत्वम्-भयदयालज्जाशून्यत्वम् *१* कामक्रीडाविषये कर्तव्याकर्त्तव्याविचारकत्वमिति रसमञ्जर्याम् ॥ ४२ ॥

अधर्मः-वेदादिनिषिद्धकर्मजन्यं पापम् १ बलवदनिष्टप्रयोजकत्वे सति वेदप्रपापितत्वमधर्मत्वम् २ वेदबोधितानिष्टसाधनतात्वम्। विषभक्षणादिवारणाय वेदेति,

ब्रह्मयागादेरपि वेदबोधित्वमस्तीति त-
द्वरणायानिष्टत्यर्थसङ्ग्रहटीकायाम् ३ नि-
षिद्धकर्मजन्यनरकजनकदृष्टवृत्तिगुणत्वव्याप्य-
जातिमानिति नार्किकाः ॥ ४६ ॥
अधिकत्वम्-योग्यपरिमाणातिक्रमत्वम्
*१*अधिकहेत्वादिकथनत्वम् ॥ ४८ ॥
अधिकरणम्-साक्षात्परम्परया वा क्रि-
याश्रयः *१* वेदविचारात्मिको न्यायः २
विषयसंशयपूर्वपदसङ्गतिपूर्वपक्षसिद्धान्तनि
र्णयात्मकपञ्चा (ङ्गाधारत्वम्) ङ्गबोधक-
वाक्यसमुदायो वा ३ विषयो विशयश्चैव
पूर्वपक्षस्तथोत्तरम्, निर्णय(सङ्गति) श्चे-
ति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥५२॥
अधिकारत्वम्-फलभोक्तृत्वे सति कर्म-
कर्तृत्वम् *१* उत्तरोत्तरसम्बन्धत्वम्
*२* यथेष्टं क्रयविक्रयादिकर्तृत्वसम्पा-

दकस्वामित्वम् * २ * अनेकदेहारम्भकत्वे सति बलवत्प्रारब्धकर्मफलत्वम्॥ ८७॥

अधिकारविधिः—फलस्वाम्यबोधको विधिः १ सेतिकर्तव्यताकस्य करणस्य यागादेः फलसम्बन्धबोधको विधिर्वा यथा यजेत स्वर्गकामः ॥ ८८ ॥

अधिकारित्वम्-तत्तत्कर्मजन्यफलार्थित्वम् १ तत्तत्कर्मकरणयोग्यत्वं वा *२* द्विविधप्रयोजनप्राप्तिकामित्वमिति नैयायिकाः ३ अद्वैतमते तु विधिवदधीतवेदाऽङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नि-

१ फलस्वाम्यं नाम कर्मजन्यफलभोक्तृत्वम्

तान्तर्निर्मलस्वान्तः साधनचतुष्टयसंपन्नोयः
प्रमाता तत्त्वम् ४ मलविक्षेपराहितत्वे सति
साधनचतुष्टयसम्पन्नत्वे सति स्वस्वरू-
पाज्ञानवत्त्वमिति ग्रन्थान्तरे ॥ ६३ ॥

आधिष्ठातृत्वम्–सन्निधानमात्रेण तत्तत्प-
दार्थानां तत्तत्कर्मसु नियन्तृत्वम् ॥ ६४ ॥

अधिष्ठानम्-यदाधारमारोप्यं भासते तत् १
सत्तास्फूर्त्तिप्रदातृ (न) त्वमधिष्ठानम् २
सविलासाज्ञानविषयत्वमिति ग्रं० ॥६७॥

अध्ययनम्-अक्षरमात्रपाठ इति वैदिकाः १
सार्थाक्षरग्रहणमिति मी० २ गुरुमुखतः
शास्त्रार्थज्ञानम् ३ पूर्वगुरुमुखोच्चारणत्वे स-
त्युत्तरशिष्योच्चारणमिति वे० सि० लेशे७१

अध्यस्तत्वम्–संप्रयोगजन्यत्वे सति प्र-
त्यभिज्ञाभिन्नत्वे सति संस्कारजन्यत्वम् ।

स्मृतावतिव्याप्तिवारणाय संप्रयोगजन्यत्वे सतीति, प्रमायामतिव्याप्तिरत उत्तरदलम् ॥ ७२ ॥

अध्यात्मत्वम्—आत्मानं देहेन्द्रियादिकं क्षेत्रज्ञं ब्रह्म वाऽधिकृत्य वर्तमानत्वम् ॥ ७३ ॥

अध्यात्मशास्त्रम्—आत्मानमधिकृत्य प्रवृत्तं शास्त्रम् ॥ ७४ ॥

अध्यारोपः—वस्तुन्यवस्त्वारोपः, यथा शुक्तिकाशकलादौ रजतादेः । वस्तु, चिदात्मा, तत्रावस्तुनः प्रपञ्चस्यारोपः ॥ ७५ ॥

अध्यासः—परत्र परावभासः १ स्वाभावाधिकरणेऽवभास इति ग्रन्थान्तरे २ अधि-

---

१ अवभासते इत्यवभास इति व्युत्पत्त्याऽवभासशब्दोऽर्थाध्यासपरः, अवभास्यतेऽर्थः(रजतादिः)अनेनेति व्युत्पत्त्या च ज्ञानाध्यासपरः

ष्ठानविषमसत्ताकावभास इति परिमल-
ब्रह्मविद्याभरणयोः ३ एकावच्छेदेन
स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभासः।
स्वात्यन्ताभाववत्यवभास एतावन्मात्रो-
क्तौ यत्र भूतलादौ घटोऽपसारितः पुन-
श्चानीतस्तादृशघटादावातिप्रसङ्गः स्यादिति
स्वसंसृज्यमान इत्युक्तम्, एवमपि मू-
लावच्छेदेन कपिसंयोगात्यन्ताभाववति
वृक्षे शाखाग्रावच्छेदेन च तत्संसृज्यमाने-
ऽवभासमानत्वात्संयोगस्य तत्रातिप्रसङ्गः
स्यादित्यत एकावच्छेदेनेत्युक्तमिति भा
ष्यरत्नप्रभायाम् ४ दोषजन्यत्वे सति सं-
स्कारजन्यत्वम् ५ यद्वा, अधिष्ठानसामा-
न्यज्ञानजन्यत्वे सति दोषजन्यत्वमिति म-
तान्तरे ६ पारमार्थिकत्वावच्छिन्नस्वात्य-

न्ताभावाधिकरणे प्रतीयमानत्वमिति वे० तत्त्वविवेके नृसिंहाश्रमाचार्याः ७ स द्विविधो ज्ञानाध्यासोऽर्थाध्यासश्च । यद्वा, स्वरूपाध्यासः संसर्गाध्यासश्चेति द्विविधोऽध्यासः। तत्राद्यो रज्ज्वादौ भुजङ्गाद्यध्यास आत्मनि वाऽनात्माध्यासो द्वितीयस्तु स्फटिके लौहित्यस्य शङ्खे च पीतिम्नोऽनात्मनि चात्मतद्धर्मादेः, आत्मादेः पारमार्थिकत्वेन स्वरूपतोऽध्यासाभावात् । अथवा, प्रकारान्तरेण सोपाधिको निरुपाधिकश्चेति भेदादध्यासो द्विविधः । द्विविधोऽप्यसौ बाह्याभ्यन्तरभेदात्पुनर्द्विविधः । तत्र लोहितस्फटिकादिर्बाह्यः सोपाधिको भ्रमः, जपाकुसुमादेरुपाधित्वात् । कर्तृत्वादिभ्रम आन्तरः, कर्मरूपेण परिणताऽवि-

द्यारूपोपाधिकार्यत्वात् । शुक्तिरूप्यादिस्तु बाह्यो निरुपाधिको भ्रमः । आकाशादिभ्रमोपि बाह्यो निरुपाधिकः । अहमज्ञो ब्रह्म न जानामीत्याद्याभ्यन्तरः निरुपाधिको भ्रम इत्यादीनि बोद्धव्यानि विस्तरस्तु गुरुमुखादेवावगन्तव्यः ॥ ८३ ॥

अध्याहारः–अश्रुतपदानुसन्धानम् १ आकाङ्क्षाविषयपदानुसन्धानं वा ॥ ८५ ॥

अनवस्था–पूर्वस्योत्तरोत्तरापेक्षितत्वम् १ अप्रमाणिकानन्तप्रवाहमूलकप्रसङ्गत्वमिति तार्किकाः २ उपपाद्योपपादकप्रवाहोऽनवधिः । चक्रकव्यावृत्त्यर्थमनवधिरिति, साकाङ्क्षतापरिहारायोपपाद्योपपादकेति मी० मते ३ सा द्विविधा–अधो धावन्ती,

१ अनवधिककार्यकारणप्रवाहापातिरित्यर्थः ।

ऊर्द्ध्वं धावन्ती चेति। तत्राऽधो धावन्ती यथा घटजनने कपालाऽपेक्षा कपालजनने कपालिकायास्तज्जनने च तदवयवानामपेक्षा एवं तत्र तत्रेति । ऊर्द्ध्वं धावन्त्यनवस्था यथा 'भेदः किं भिन्ने धर्मिणि वर्ततेऽभिन्ने वा आद्योऽपि केन भेदेन भिन्ने कस्य भेदस्याऽवस्थितिः ?' इतिप्रश्ने 'द्वितीयभेदभिन्ने धर्मिणि प्रथमस्य, तृतीयभेदभिन्ने द्वितीयस्य, चतुर्थभेदभिन्ने तृतीयस्य, एवं तत्र तत्रापि' इत्यङ्गीकारे । अनवस्थाऽङ्गीकारे प्राग्लोपविनिगमनाविरहप्रमाणाभावदोषत्रयं भवति ॥ ८८ ॥

अनिच्छाप्रारब्धम्—अकस्माज्जायमानं य कण्टकवेधादि ॥ ८९ ॥

अनित्यत्वम्–ध्वंसप्रागभावान्यतरप्रतियो-

गित्वमिति नैयायिकाः १ ध्वंसप्रतियोगि-
वृत्तिविशिष्टसत्तायोगित्वमिति गौडब्रह्मा-
नन्दाः ॥ ९१ ॥

अनिर्वचनीयत्वम्—सदसद्विलक्षणत्वम् १
प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमिति-
चित्सुखव्याम् २ सदन्यत्वे सत्यसदन्यत्वे
सत्युभयात्मकान्यत्वम् ३ सत्त्वरहितत्वे
सत्यसत्त्वरहितत्वे सति सदसत्त्वरहितत्वं
वा ४ सत्त्वासत्त्वाभ्यां विचारासहिष्णुत्वे
सति सदसत्त्वेन विचारासहिष्णुत्वमित्य-
द्वैतसिद्धौ ५ सत्त्वानधिकरणत्वे सत्य-
सत्त्वानधिकरणत्वे सति सदसत्त्वानधिक-
रणत्वमिति न्यायमकरन्दटीकायाम् ॥

अनिर्वचनीयख्यातिः—सदसदादिप्रकारैर-
निर्वाच्यस्यैवाध्यस्तपदार्थस्य भानम् ॥९८॥

अनुकूलत्वम्-स्वपक्षपातित्वम् *१*का-
र्यसहकारिकारणत्वम् ॥ १०० ॥

अनुक्रमः-यस्योत्तरं यस्य पाठकरणम् ॥

अनुगतत्वम्-एकत्वे सत्यनेकवृत्तित्वम् १०२

अनुग्रहः-दुःखिनो दुःखापाकरणे प्रवृ-
त्तिः १ अनिष्टनिवारणपूर्वकेष्टसाधनेच्छेतिग्रं०

अनुचिन्तनम्-श्रुतार्थविषयकयुक्तायुक्तत्वा-
दिसंशयनिवर्तकयुक्त्यनुसन्धानम् ॥१०५॥

अनुद्भूतत्वम्-अतीन्द्रियविशेषगुणत्वम्।

अनुपलब्धिप्रमाणम्-योग्यत्वे सत्यनु-
पलम्भोऽभावप्रमाकरणम्। अयोग्यभूतल-
लग्नसलिलानुपलम्भनिरासाय योग्येति,
योग्यस्योपलम्भनिरासायानुपलम्भेति १
ज्ञानकरणाऽजन्याभावानुभवासाधारणका
रणम्। अदृष्टादौ साधारणेऽतिव्याप्तिवा-

रणायासाधारणेति, ज्ञानकरणाजन्य-
घटादिभावपदार्थप्रत्यक्षानुभवासाधारणका-
रणे चक्षुरादावतिव्याप्तिवारणायाभावे-
ति, अभावस्मृतिहेतौ संस्कारेऽतिव्याप्ति-
वारणायानुभवेति, अयं विघ्नाफलकध-
र्माभाववान् मूर्खत्वादित्याद्यतीन्द्रियाभा-
वानुभवहेतावनुमानादावतिव्याप्तिवारणा-
याजन्यान्तविशेषणमिति धर्मराजेन २
ज्ञानाकरणकाभावानुभवकरणत्वमनुपल-
ब्धिप्रमाणत्वमिति चूडामणौ ॥ १०९ ॥
अनुपादेयम्-स्वकृतिसाध्यत्वविरहः॥११०॥
अनुबन्धः—मङ्गलाचरणाव्यवहितोत्तरमेव-
ग्रन्थादावनुबध्यमानः १ यद्वा, स्वविषय-
कज्ञानद्वारा शास्त्रे प्रवर्तकः २ 'सर्वेषामेव
शास्त्राणामनुबन्धचतुष्टयम्, पृथक् पृथक्

भवत्येतज्ज्ञातं शास्त्रे प्रवर्तकम् ॥ ११२ ॥

अनुभवः—स्मृतिभिन्नज्ञानम् । घटादावति-व्याप्तिवारणाय ज्ञानमिति, स्मृतिवारणाय स्मृतिभिन्नेति ॥ ११३ ॥

अनुभूतत्वम्—अनुभवविषयीभूतत्वम् ११४।

अनुभूयमानारोपः—प्रत्यक्षानुभवविषयारोपः ॥ ११५ ॥

अनुमानप्रमाणम्—अनुमितिप्रमाकरण-म् । कुठारादावतिव्याप्तिवारणायानुमि-तीति, प्रत्यक्षादावतिव्याप्तिवारणायानुमे-ति १ अपरे तु स्वजन्यव्यापारवत्तासम्ब-न्धेनानुमितेरसाधारणकारणत्वम् २ ज्ञा-तसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽस-न्निकृष्टार्थे बुद्धिरिति शाबरभाष्ये ३ 'य-दर्थदृगर्थदर्शनं तदिति वैभाषिकाणां सू-

त्रकृतो दिङ्नागस्य सूत्रम् ४अनुमीयतेऽने-
नेति । तद्द्विविधं वीतमवीतश्चेति ल० त-
त्तच्छब्दे द्रष्टव्यम् ॥ १२६ ॥

अनुमिति–व्याप्तिज्ञानकरणकं ज्ञानम् १प-
रामर्शजन्यं ज्ञानं वा प्रत्यक्षादावतिव्याप्ति-
वारणाय परामर्शजन्यमिति, परामर्श-
ध्वंसवारणाय ज्ञानमिति न्यायग्रन्थे २
लिङ्गज्ञानजन्यं ज्ञानम् ३ व्याप्तिज्ञानत्वेन
व्याप्तिज्ञानजन्यं वा ४ व्याप्यज्ञानाद्व्याप-
कज्ञानं वा ५ व्याप्तिविशिष्टपक्षधर्मताज्ञान
जन्यज्ञानं वा ६ साधनधर्मदर्शनात्साध्य-
धर्मविशिष्टे बुद्धिर्वा . ७ लिङ्गलिङ्गिपूर्वकं
स्वज्ञानद्वारा हेतुपक्षजन्यसाध्यज्ञानमिति
सांख्याः ८ सा द्विविधा स्वार्था परार्था
चेति लक्षणं तत्तच्छब्दे द्र० ॥ १२७ ॥

अनुयोगी:—यस्मिन्नधात्रः सम्बन्धः साद्द-
श्यं वास्ति स ३ विशिष्टप्रतीतिविषयाविशे-
ष्यत्वमनुयोगित्वम् ॥ १३१ ॥
अनुवादः—उक्तस्य पुनर्वचनम्, यथा
जुहोति जुहोतीत्यादि १ प्रमाणान्त-
रावगता ( प्राप्ता ) र्थबोधकः, यथा अग्नि-
र्हिमस्य भेषजमिति मी०२ मानान्तरेण
निर्णीतार्थज्ञापकः शब्द इति न्या० ॥१३४॥
अनुवृत्तिः—पठितस्य पुनः पठनम् *१*
दवीयस्स्थानान्तरास्थितस्यानुसन्धानमिति-
दिनकर्याम् ॥ १३६ ॥
अनुव्यवसायत्वम्—ज्ञानाविषयकज्ञानत्वम्
अनुषङ्गः—एकत्रान्वितपदस्यान्यत्रान्वयः१
वाक्यान्तरे जनितान्वयबोधपदस्य वाक्या-
न्तरेऽन्वयार्थानु ( भि ) सन्धानं वा २

नेदीयस्थानान्तरस्थितस्यानुसन्धानमिति
दिन० *३* अन्योद्देशेन प्रवृत्तस्य त-
न्नान्तरीयकविषयान्यसिद्धिः ॥ १४१ ॥
अनुष्ठानत्वम्–विहितकर्मादिकरणत्वम् ॥
अनेकत्वम्–अपेक्षाबोधाविषयत्वम् ॥१४३॥
अनैकान्तिकः–विरुद्धान्यपक्षवृत्तित्वे स-
त्यनुमितिविरोधिसम्बन्धाव्यावृत्तः ।१४४।
अन्तःकरणम्-सर्वज्ञानादिप्रत्यक्षकरणम् १
शरीरान्तःस्थत्वे सतीन्द्रियसहायकत्वम-
न्तःकरणत्वम् २ यद्वा, ज्ञानशक्तिप्रधानत्वे
सति मिलितसमस्तापञ्चीकृतपञ्चमहाभूत-
सात्विकांशकार्यत्वम् ॥ १४७ ॥
अन्तःकरणशुद्धत्वम—परवञ्चनमायानृ-

१ परवञ्चनत्वम्–परस्य व्याजेन वशी-
करणत्वम् ।

२ अनृतत्वम्—अयथादृष्टकरणत्वम् ।

तादिपरिवर्ज ( र्जि ) नत्वम् ॥ १४८ ॥

अन्त्यावयवित्वम्-द्रव्यानारम्भकत्वे सति कार्यद्रव्यत्वम् १ अवयवजन्यत्वे सत्यवयव्यजनकत्वं वा ॥ १५० ॥

अन्धः-श्रुतिस्मृति च विप्राणां चक्षुषी देवनिर्मिते, काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥ १५२ ॥

अन्धकारत्वम्-भयदृष्टितेजोऽवरोधकारित्वम् ॥ १५२ ॥

अन्धतामिस्रः (अभिनिवेशः) अणिमादिगुणसम्पत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति यस्त्रासः ।

अन्नमयकोशः-मातृपितृभुक्तान्नजशुक्रशोणितकार्यं स्थूलशरीरम् ॥ १५४ ॥

अन्यतमः-अनेकमध्ये निर्द्धारितैक इति

व्याकरणे १ न्यायमते तु अनेकभेदा-
वच्छिन्नप्रतियोगिताकभेदः २ स्वेतरयावत्-
प्रतियोगिभेदवत्त्वमन्यतमत्वम् ३ तद्भिन्न-
त्वे सति तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वम्,
यथा घटपटगृहान्यतम इत्यादि ॥१५८॥
अन्यतरः-द्वयोर्मध्ये निर्द्धारितैक इति व्या०
१ न्यायमते द्वयावच्छिन्नप्रतियोगिताकभे-
दः २ भेदद्वयाभाववत्त्वमन्यतरत्वम् ३ एत-
द्भिन्नत्वे सत्येतद्भिन्नो यस्तद्भिन्नत्वमितिपु०
४तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वमिति ग्रं०
अन्यतरकर्मजसंयोगः-क्रियाऽभाववत्स-
मवेतत्वे सति क्रियावत्समवेतसंयोगः १६४
अन्यथाख्यातिः-अन्याकारज्ञानस्याल-
म्बनम् १ तदभाववति तत्प्रकारकभानं वेति
भाट्टवैशेषिकमतयोः ॥ १६६ ॥

अन्यथानुपपत्तिः—स्वाभावप्रयोज्यासम्भवम् ॥ १६७ ॥

अन्यासिद्धत्वम्—कारणसामग्रीबाह्यत्वम् ।

अन्यथासिद्धित्वम्—कार्याव्यवहितपूर्ववर्तित्वे सति कार्यानुत्पादकत्वम् ॥१६९॥

अन्यथैवोपपत्तिः-वैपरीत्येनोपपत्तिसाम्यम्

अन्योन्याध्यासः—अन्योन्यस्मिन् अन्योन्यतादात्म्यस्याध्यासः ॥ १७१ ॥

अन्योन्याभावः—तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावः । प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति१अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभाव इति सर्वदर्शनसंग्रहः ॥ १७३ ॥

अन्योन्याश्रः अन्योन्यस्याऽव्यवहिताऽन्योन्यापेक्षितत्वम् । आत्माश्रयव्यावर्तनायान्यो-

न्यस्येति १ स्वापेक्षापेक्षितत्वनिबन्धनप्रस-
क्तत्वमन्योन्याश्रयत्वमितिन्या०२स्वग्रहसापे-
क्षग्रहसापेक्षग्रहकत्वम् , यथा महिषभिन्नत्वं
गोत्वं, गोभिन्नत्वं च महिषत्वमित्येवं ल
क्षणे, गोत्वज्ञानाय महिषत्वज्ञानापेक्षा, म-
हिषत्वज्ञानाय च गोत्वज्ञानापेक्षेति वे-
दान्तमते ३ स्वज्ञप्त्यधीनज्ञप्तिकत्वमिति
केचित् ॥ १७७ ॥

अन्वयः—परस्परमर्थागमनम्१ स्वसत्ता-
नियतसत्तावत्कार्यसंम्बन्धो वा २ यत्सत्त्वे
यत्सत्त्वमिति ग्रं० ॥ १८० ॥

---

१ स्वग्रहः स्वज्ञानम् तस्य सापेक्षोऽपे-
क्षाकारी यो ग्रहस्तस्य सापेक्षोऽपेक्षाकारी
ग्रहो ज्ञानं यस्य तस्य भावस्तत्त्वमित्यर्थः ।

अन्वयव्यभिचारः—कारणसत्त्वे कार्याभावः १ (स्वेतरयावत्कारणाधिकरण) स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिकार्यकत्वमन्वयव्यभिचारत्वम् ॥ १८२ ॥

अन्वयव्याप्तिः—हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्

अन्वयसहचारः—कारणसत्त्वे कार्यसत्त्वम्

अपभ्रंशः—साधुशब्दस्य शक्तिवैफल्यप्रयुक्तान्यथोच्चारणयुक्तोऽपशब्दः ॥ १८५ ॥

अपञ्चीकरणम्—स्वेतरभूतचतुष्टयामिश्रीतकरणम् ॥ १८६ ॥

अपरत्वम्—न्यूनदेशवृत्तित्वम् १ अपरव्यवहारासाधारणकारणत्वमिति ग्रं० ॥ १८८ ॥

अपरवैराग्यम्—ब्रह्मज्ञानान्यविषयवैतृष्ण्यम्। तच्च यतमानव्यतिरेकैकेन्द्रियवशीकार-

भेदेन चतुर्विधं ल. तत्सच्छब्दे द्र. ॥१८९॥
अपराधत्वम्–दण्डयोग्यकर्मकरणत्वम् १ स्वोचितकर्माकरणत्वं वा २ अपरं तु शास्त्रविध्युल्लङ्घनत्वे सति निषिद्धसेवनजातदुरितविशेषत्वम् ॥ १९२ ॥
अपरिग्रहः–समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासंग्रहः १ देहयात्रानिर्वाहकातिरिक्तभोगसाधनाना (म) मनङ्गीकारः ।
अपरोक्षज्ञानम्
प्रत्यक्षज्ञानम् } विषयचित्तादात्म्यापन्नं प्रमाणचैतन्यम् १ अनधिगताबाधितवर्तमानयोग्यविषयचैतन्याभिन्नं प्रमाणचैतन्यं वा प्रत्यक्षप्रमाऽपरपर्यायः । अधिगतार्थ-

---

१ अर्जनरक्षणक्षयसङ्गहिंसारूपदोषदर्शनादस्वीकरणमित्यर्थः ।

विषयकयथार्थस्मृतावतिप्रसङ्गवारणार्थमन-
धिगतेति विषयविशेषणम्, भ्रमज्ञानेऽति-
प्रसङ्गवारणार्थमबाधितेति, धर्माधर्मयोः प्र-
त्यक्षवारणाय योग्येति च विषयविशेषणम्
अपवादः—अधिष्ठाने भ्रान्त्या प्रतीतस्याधि-
ष्ठानव्यतिरेकेणाभावनिश्चयः, यथा शुक्त्या-
दौ भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यति-
रेकेण नेदं रजतं किन्तु शुक्तिरित्यभावनि-
श्चयः १ अध्यारोपितस्याधिष्ठानमात्रपर्यव-
शेषणमपमेव बाधो विलापनमितिग्रन्थान्तरे
अपसिद्धान्तनिग्रहस्थानम्-एकसिद्धा-
न्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धा-
न्तमतमालम्ब्योत्तरदानम् ॥ १९ ॥
अपूर्वम्—वैधनिषिद्धक्रियाजन्ययोः काला-
न्तरभाविनोः सुखदुःखयोर्हेतुभूतं पुण्यपा-

पमिति श्रुतेरभिधाने ॥ २०० ॥

अपूर्वता—प्रकरणप्रतिपाद्यस्य मानान्तराऽविषयता, यथा तन्त्वौपनिषदं पुरुषं पृच्छामीत्यद्वितीयवस्तुन उपनिषदतिरिक्तमानाविषयता ॥ २०१ ॥

अपूर्वविधिः—प्रमाणान्तरेणात्यन्ताऽप्राप्तार्थविधायको विधिः, यथा व्रीहीन्प्रोक्षतीति व्रीहिप्रोक्षणविधिः । नियमादिविधावतिव्याप्तिवारणाय प्रमाणेति ॥ २०२ ॥

अपेक्षा—कार्यनिमित्तयोरन्योन्याभिसंबन्ध इति सुपद्मटीकायां विष्णुमिश्रः ॥२०३॥

अपेक्षाबुद्धिः—विनाशकविनाशप्रतियोगिनी बुद्धिः १ अनेकैकत्वविषयिणी बुद्धिर्वा

अपोहः—शिष्यस्य मिथ्याग्रहणापाकरणसामर्थ्यम् १. यद्वा, सिद्धान्तप्रतिपक्षनिरा-

करणसामर्थ्यमित्युपदेशसाहस्रीयटीकायां रामतीर्थः ॥ २०७ ॥

अपौरुषेयत्वम्-वाक्यार्थज्ञानापेक्षोच्चारणक(मात्र)वृत्त्यानुपूर्वीशून्यत्वम् १ सजातीयोच्चारणानपेक्षोच्चारणकवृत्त्यानुपूर्वीरहितत्वं वा २ मतान्तरे तु स्वानुपजीविप्रमाणजन्यसमानप्रकारविशेष्यकोच्चारणसापेक्षोच्चारणविषयत्वम् ३ पूर्वकल्पीयानुपूर्व्यघटितत्वमिति वेदान्तमते ४ जैमिनीयास्तु स्वसजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वम् ५ यद्वा, स (अविच्छिन्नव्यवहारत्वे) म्प्रदायाविच्छेदत्वे सत्यस्मर्यमाणकर्तृकत्वम् । अज्ञातकर्तृके जीर्णकूपारामादौ व्यभिचारवारणाय संप्रदायाविच्छेदत्वे सतीति, भारतादिषु व्यभिचारपरिहाराय

स्मर्यमाणकर्तृकत्वमिति ॥ २१३ ॥

अप्रतिभानिग्रहस्थानम्–उत्तरार्हं परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात्तूर्णीम्भावः ॥ २१४ ॥

अप्रमा–प्रमाभिन्नं ज्ञानम् । प्रमावारणायभिन्नेति, घटादिवारणाय ज्ञानेति॥२१५॥

अप्रमात्वम्– }
अप्रामाण्यम् } दोषसहकृतज्ञानसामग्रीजन्यत्वम् १ तदभाववति तत्प्रकारकत्वमप्रामाण्यम् ॥ २१७ ॥

अबाध्यत्वम्–त्रैकालिकनिषेधाप्रतियोगित्वम् ॥ २१८ ॥

अभानापादकावरणम्–(कूटस्थो) न भातीत्याकारकाभानापादनप्रयोजकीभूतमावरणम् ॥ २१९ ॥

अभावः—निषेधमुखप्रतीतिविषयः १ प्रतियोगिसापेक्षप्रतीतिविषयो वा २ प्रतियोगिनिरूपणाधीनानिरूपणको वा ३ आदर्शे तु नञ्शब्दोल्लेखिप्रतीतिविषयः ४ प्रतियोग्यारोपितसंसर्गजन्यप्रतीतिविषयः ५ अन्ये तु सम्बन्धसादृश्यभिन्नत्वे सति प्रतियोगिज्ञानाधीनज्ञानविषयः ॥ २२५ ॥

अभावप्रमा—योग्यानुपलब्धिकरणिका प्रमा, यथा घटाद्यनुपलब्ध्या घटाभावप्रमा भूतले जायते ॥ २२६ ॥

अभिचारः—मारणोच्चाटनादिफलकतान्त्रिकप्रयोगविशेष इति तन्त्रसारे २२७

अभिज्ञाप्रत्यक्षम्—इदन्तामात्रावगाहिज्ञानम् १ योगमञ्जर्यां तु विषयसंबद्धेन्द्रियजन्यं ज्ञानम्, यथाऽयं घटोऽयं पट इत्यादि

अभिधानत्वम्–अन्वयबोधफलकशब्दप्रयोगत्वम् ॥ २३० ॥

अभिधानानुपपत्तिः–अनुपपद्यमानवाक्यैकदेशश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा द्वारमित्यस्य वाक्यैकदेशस्य पिधेहीति पदार्थान्तरकल्पनमन्तरानुपपत्त्या तत्कल्पनम् ॥ २३१ ॥

अभिधेयाविधिः–कृतिसाध्यत्वे सतीष्टसाधनत्वम् ॥ २३२ ॥

अभिनिवेशः–आयुरभावेऽप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे माभूदित्यविद्वदङ्गनाबालं स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासः १ स्वीकृतस्य पुनस्त्यागाऽसहिष्णुत्वमिति ग्रं० ॥२३४॥

अभिन्नत्वम्–भेदानधिकरणत्वम् ॥२३५॥

अभिन्ननिमित्तोपादानम्—निमित्तञ्च तदुपादानं चेति निमित्तोपादानम्, अभिन्नञ्च तन्निमित्तोपादानं चेति कर्मधारयः २३६

अभिभवः—बलवत्सजातीयसंबन्ध(ग्रहण) कृतमग्रहणम् ॥ २२७ ॥

अभिमानत्वम्-आत्मन्युत्कर्षारोपत्वम् २३८

अभिलाषः—इष्टविषयकतृष्णा ॥ २३९ ॥

अभिवादनम्—नामो(पादस्पर्शपू) च्चारणपूर्वकनमस्कारः ॥ २४० ॥

अभिव्यक्तिः—सूक्ष्मरूपेण स्थितस्य कारणस्य कार्यरूपेणाविर्भावः *१* कार्यस्यास्ति प्रकाशत इति व्यवहारः ॥२४२॥

अभिहितानुपपत्तिः—अनुपपद्यमानसमग्रवाक्यश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा तरति शोकमात्मविद्-

ति ममातृत्वादिबन्धस्य शोकोपलक्षितस्य ज्ञाननिवर्त्यत्वश्रवणाच्छोकस्य मिथ्यात्वमन्तरानुपपद्यमानाच्छोकस्य मिथ्यात्वकल्पनं यथा वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यश्रवणाददृष्टस्य प्रकल्पनमित्यादर्शे ॥ २४३ ॥

अभ्यागतत्वम्—भिन्नस्थानीयत्वे सति स्वस्थानागतत्वम् ॥ २४४ ॥

अभ्यासः—पुनः पुनरनुशीलनम् १ उत्साहरूपप्रयत्नस्य पुनः पुनरनुष्ठानत्वमभ्यासत्वम् *२* प्रकरणप्रतिपाद्यस्य पुनः पुनः प्रतिपादनम्, यथा तत्त्वमसीति नवकृत्वोऽभ्यासः ॥ २४७ ॥

अभ्युपगमवादः—वादिबलनिरीक्षणार्थमनिष्टमपि स्वीकरणम् ॥ २४८ ॥

अयथार्थानुभवः—दुष्टसामग्रीजन्यं ज्ञानम् १ बाधितार्थविषयानुभवो वा यथा शुक्ताविदं रजतमिति ज्ञानम् । प्रमायामतिव्याप्तिवारणायाद्यविशेषणम्, अयथार्थस्मृतावतिव्याप्तिवारणाय द्वितीयम् ॥ २५० ॥

अयुतसिद्धिः—असम्बद्धयोरविद्यमानत्वम्।

अयोनिजशरीरम्—योनिजभिन्नं शरीरं तत् स्वेदजोद्भिज्जदेवनारकिकादिकम् ॥

अरणिः—घर्षणद्वाराग्निजनककाष्ठम् ॥२५३॥

अरिः—स्वकृतापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्त्ता ॥ २५४ ॥

अर्थः—एकैकेन्द्रियमात्रग्राह्यविशेषगुणः १ अर्थ्यते प्रार्थ्यते प्राणिभिरिति वित्तादिः२५५

अर्थवादः—विध्यसमभिव्याहृतवाक्यम् १ प्राशस्त्यनिन्दान्यतरपरं वाक्यं वा *२*

प्रकरणप्रतिपाद्यस्य प्रशंसनम्, यथा ये-
नाश्रुतं श्रुतं भवत्यमतं मतमविज्ञा-
तं विज्ञातमित्यद्वितीयवस्तुप्रशंसनम् १
स त्रिविधः गुणवादोऽनुवादो [२८पृ०]
भूतार्थवादश्चेति छ०तत्तच्छब्दे द्र०॥२५८॥

अर्थव्यसनम् } शास्त्रतात्पर्याग्रहणेन सम-
अर्थवासना }
ग्रावस्थाशास्त्रार्थासक्तिः ॥ २२९ ॥

अर्थाध्यासः-प्र ( अज्ञातगोचरवृत्त्यनुपहि
तत्वे ) माणाजन्यज्ञानविषयत्वे सति पू-
र्वदृष्टस ( त्वानधिकरणं ) जातीयः, यथा
शुक्तौ रजताध्यास आत्मनि चानात्मा-
ध्यासः । स्मर्यमाणगङ्गादौ अभिनवघटे
चातिव्याप्तिनिरासाय प्रमाणेत्यादिपद-
द्वयमिति ॥ २६० ॥

अर्थान्तरनिग्रहस्थानम्—प्रकृतानुपयुक्तार्थकथनम् ॥ २६१ ॥

अर्थापत्तिप्रमा—अन्यथानुपपन्नदर्शनादुपपादके बुद्धिः १ ग्रन्थान्तरे तु सम्पाद्यज्ञानप्रभवं सम्पादकज्ञानम् २ अनुपपद्यमानार्थज्ञानात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा दिवाऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनं विनाऽनुपपद्यमानपीनत्वज्ञानात्तदुपपादकरात्रिभोजनकल्पनमित्यद्वैतकौस्तुभे ३ उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः। अर्थस्य पदार्थविशेषस्य आपत्तिर्ज्ञान-

---

१ उपपाद्यः—योऽर्थोऽन्येन केनचित्कल्पनीयेन विना नोपपद्यते सोऽर्थः।

२ उपपादकः—यस्य कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते स कल्पनीयोऽर्थः।

मिति तत्पुरुषसमासेनार्थापत्तिशब्दः प्रमाप-
रः, अर्थस्यापत्तिर्यस्मादिति बहुव्रीहिणा-
प्रमाणपरोऽपीत्यर्थापत्तिशब्दः प्रमाप्रमाणो-
भयपरः, प्रत्यक्षशब्दवत् ४ सा द्विविधा दृ-
ष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति ल.त. श.द०

अर्थापत्तिप्रमाणम्—उप (संपा) पादकप्र-
माकरणम् १ यद्वा, उपपादककल्पनाहे-
तुभूतोपपाद्यज्ञानम् ॥ २६७ ॥

अर्पणम्—स्वत्वत्यागानुकूलव्यापारः॥२६८॥

अलङ्कारत्वम्—शब्दार्थयोः शोभाकारित्व-
म् १ रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति श-
ब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धा-
वच्छिन्ना चमत्कृतिजनकतावच्छेदकता त-
दवच्छेदकत्वमिति कुवलयानन्दटीकायाम्

अलीकत्वम्—तादृशप्रतियोगिताविशिष्टत्वे

सत्यप्रतीयमानत्वम् १ सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वे सति सत्तादात्म्यशून्यत्वमिति ग्रन्थान्तरे ॥ २७२ ॥

अलोलुपत्वम्–विषयसंनिधाने सति इन्द्रियाणामविक्रियत्वम् ॥ २७३ ॥

अलौकिकः–विधिमन्त्रसंस्कारादिप्राप्तिभिन्नः।

अल्पत्वम्–यस्य वस्तुनः यावती इयत्ता उचिता ततो न्यूनत्वम् ॥ २७५ ॥

अवकाशः–अवस्थितियोग्यतासम्पादकोऽवसरः ॥ २७६ ॥

अवघातः–व्रीहिसंस्कारार्थव्यापारः॥ २७७॥

अवच्छेदः–विशेषणोपाधिनाविशेषकरणम्।

अवच्छेदकत्वम्–अनतिरिक्तदेशवृत्तित्वम् १ अवच्छिद्यन्यूनानतिरिक्तकालीनविशेष्यसम्बन्धवत्त्वमिति मतान्तरे ॥ २८० ॥

अवतरणिका-ग्रन्थप्रस्तावार्थं प्रथममुपोद्घातः ॥ २८३ ॥

अवतारः-देवानामंशावेशवशेन प्रादुर्भावः १ उत्कृष्टावस्थाभागित्वे सति निकृष्टावस्थाग्रहणमिति ग्रं० २ स्वादृष्टारचितत्वे सत्यभौतिकशरीरत्वे सति साध्वसाधुसुखदुःखहेतुत्वमित्यन्यः ॥ २८४ ॥

अवधित्वम्-स्वाभिधेयापेक्षया विभागाश्रयत्वम् ॥ २८५ ॥

अवयवः-समुदायस्यांशरूपः १ अवच्छिन्नपरिमाणवत्त्वमवयवत्वम् *२* द्रव्यसमवायिकारणम् ३ द्रव्यारम्भकद्रव्यत्वमिति पु० *४* साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकः ५ [illegible]लिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यमिति पु

स्तकान्तरे ॥ २९१ ॥

अवयवित्वम्—जन्य (कार्य) द्रव्यत्वम् १ अवयवजन्यद्रव्यत्वं वा ॥ २९३ ॥

अवसरसङ्गतिः—प्रतिबन्धकीभूतशिष्याजिज्ञासानिवृत्त्यनन्तरवक्तव्यत्वम् ॥ २९४ ॥

अवस्था—कालादिकृतपरिणामान्तरदेहादेर्दशा । सा षड्विधा—आदन्तजननात्-शिशुत्वम् १ पञ्चवर्षान्तं कौमारम् २ दशवर्षान्तं बाल्यम् ३ आपञ्चदशाब्दात् कैशोरम् ४ षोडशाब्दात्परं यौवनम् ५ षाष्टिवर्षात्परं वृद्धत्वम् ॥ ३९५ ॥

अवस्थाऽज्ञानत्वम्—घटाद्यवच्छिन्नचैतन्यावरकत्वम् ॥ २९६ ॥

अवान्तरत्वम्—प्रधानान्तःपातित्वम् ।

अवान्तरतात्पर्यत्वम्—मुख्यतात्पर्यविष-

यसिद्धावुपायभूतार्थे तात्पर्यत्वम् ॥२९८॥

अवान्तरवाक्यत्वम्-तत्त्वंपदार्थान्व्यतरबोधकवाक्यत्वम् ॥ २९९ ॥

अवाप्तिः-स्वाधीनोच्चारणक्षम(=योग्य)त्वम्

अविगीतत्वम्-बलवदनिष्टाननुबन्धित्वम्

अविद्या-रजस्तमोऽभिभूतमलिनसत्त्वप्रधाना १ स्वाश्रयव्यामोहकरीति पक्षान्तरे, अज्ञानशब्दे ११ पृष्ठे द्रष्टव्यम् ॥ ३०२ ॥

अविद्यावृत्तिः-साक्षादविद्योपादाना वृत्तिः।

अविनाभावः-व्याप्यनिष्ठव्यापकनिरूपितधर्मः ॥ ३०५ ॥

अवीतमनुमानम् } निषेधमुखेन प्रवर्त्तमानं
शेषवदनुमानम् } सन्निषेधकम् ॥ ३०६ ॥

अव्यभिचारितत्वम्-साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् ॥ ३०७ ॥

अव्ययः-न विद्यते व्ययो विनाशो धर्मतः स्वरूपतोऽव्ययवतो यस्य सः ॥ २०८ ॥

अव्यवहितत्वम्-व्यवधानाभाववत्त्वम् ।

अव्याप्तिः-लक्ष्यैकदेशावृत्तित्वम्, यथा गोः कपिलत्वं लक्षणं श्वेतगवादौ लक्ष्यैकदेशेऽवृत्ति १. लक्ष्यवृत्तित्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति न्यायग्रन्थे ॥ २११ ॥

अव्याप्यत्वम्-व्याप्याभाववद्वृत्तित्वम् ।

अव्याप्यवृत्तिः-स्वात्यन्ताभावसमानाधिकरणत्वम् १ स्वसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम् २ कादाचित्कत्वे सति एकदेशवृत्तित्वमव्याप्यवृत्तित्वम् ॥ २१५ ॥

अशुचित्वम्-वैदिककर्मानर्हत्वप्रयोजको धर्मविशेषः ॥ २१६ ॥

अशुद्धत्वम्—व्याकरणादिलक्षणाननु सा-
रित्वम् *१* शास्त्रनिषिद्धानुष्ठानवत्त्वम् ।
अशुद्धिः—कर्तृद्रव्यादेः स्पर्शनाद्यनर्हतापा-
दकोदोषविशेष इति हेमाद्रौ ॥ ३१९ ॥

अशुभवासना
अशुद्धवासना } निषिद्धनिषिद्धसमविद्याक-
मेतत्संस्कारतत्फलसंस्काररूपा । निषिद्धा
विद्या स्त्रीचिन्तनादिरूपा, निषिद्धसमा
यदृच्छया काकविडाद्यवेक्षणात्मिका, नि-
षिद्धं कर्म पलाण्डुभक्षणादि, निषिद्धसमं
तृणच्छेदनादि, एतेषां चतुर्णां संस्कारास्त-
थैतेषां ततोऽपि पूर्वजन्मकृतानां यानि ज-
न्मान्तरे फलानि नरकादीनां संस्कारा
इत्यशुभवासनोदाहरणानि ॥ ३२० ॥
अशौचम—विहितकर्मानधिकारित्वसम्पा-

दकत्वम् ॥ २२१ ॥

अश्रद्धा–गुरुशास्त्रोपदिष्टेऽर्थे इदमेवं न भवत्येवेति विपर्ययबुद्धिः ॥ २२२ ॥

असत्ख्यातिः–असतः(=शून्यस्य) एवाध्यस्तपदार्थाकारेण भानम् ॥ २२३ ॥

असत्त्वम्–सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वमिति वे० सि० लेशे १ क्वचिदप्यधिकरणे सत्त्वेनाप्रतीयमानत्वमित्यद्वैतदीपिकायाम् २ सद्विलक्षणत्वे सत्यपरोक्षप्रतीतिविषयत्वमित्यद्वैतसिद्धौ ३ प्रागभावप्रतियोगित्वमिति न्यायग्रन्थे ॥ २२४ ॥

असत्यत्वम्–वस्तुस्वभावविरोधिधर्मत्वम्॥

असत्त्वापादकावरणम्–(कूटस्थः)नास्तीत्यसत्त्वापादनप्रयोजकीभूतमावरणम्॥२२५॥

असमवायिकारणम्–कार्यकारणभावस-

न्वन्ध्येकार्थसमवेतकारणम् ॥ ३३० ॥

असम्बन्धः—परस्परमन्वयाभावः १. यद्वा, प्रतियोगिताऽनुयोगिताऽन्यतरसम्बन्धेन समवायाभावः ॥ ३३२ ॥

असम्भवः—लक्ष्यमात्रावृत्तित्वम्, यथा गोरेकशफवत्त्वलक्षणं लक्ष्यगोमात्रावृत्ति, गोर्द्विशफवत्त्वात् १ लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमिति न्या०॥३३४॥

असम्भावना—बलवद्विपक्षकोटिकः संशयः। सा च प्रमाणगतप्रमेयगतभेदेन द्विविधा छ० तत्त्वच्छन्दे द्र० ॥ ३३५ ॥

असाधारणत्वम्—तन्मात्रवृत्तिधर्मयुक्तत्वम् १ लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम् । अव्याप्त्यसं-

---

१ तद्वृत्तित्वे सति तदितरावृत्तित्वम् ।

मवग्रस्तयोर्वारणाय सत्यन्तम्, अतिव्याप्तस्य वारणाय विशेष्यम् ॥३३७॥

असाधारणकारणत्वम्–कार्यतावच्छेदकावच्छिन्नकार्यानुत्पादकत्वे सति कार्यविशेषोत्पादकत्वमित्यद्वैतकौ० १ कार्यत्वा (त्वव्याप्यश्च) तिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वमिति नै०॥३३९॥

असूया–गुणेषु दोषाविष्क (कारः)रणम् १ परकीयगुणेषु दोषारोपो वा ॥ ३४१ ॥

असंसक्तिभूमिका–सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि निर्विकल्पकसमाध्यवस्था, सुषुप्तिच्छेदादेर्विस्मरणात्सुषुप्तिरिति चोच्यते ॥ ३४२ ॥

अस्तेयम्–परस्वानपहरणम् १ अदत्तादानरूपपरस्वहरणराहित्यं वा ॥ ३४४ ॥

अस्पष्टब्रह्मलिङ्गकत्वम्—सम्भाव्यमान-
स्वारस्यजीवलिङ्गाभिभूतब्रह्मलिङ्गकत्वम्,
यथा सर्वत्र प्रसिद्धाधिकरणे जीवे विषये
स्वरसानि मनोमयत्वादीनि सत्यकामत्वादि
ब्रह्मलिङ्गान्यभिभवन्ति इत्यनन्तकृष्णेन।

अस्मिता—अहङ्कारस्य सूक्ष्मावस्था *१*
अहङ्कारधर्म्य(धर्मा)ध्यासः २ बुद्ध्यादाव-
भेदाभिमानो वा ॥ ३४८ ॥

अहङ्कारः—अभिमानात्मिकान्तःकरणवृत्तिः

अहङ्ग्रहोपासना } उपास्य (ध्येय)स्वरूपस्य
अहङ्ग्रहध्यानम् } स्वाभेदेन चिन्तनम्॥३५०॥

अहिंसा—वाङ्मनःकायैः सर्वभूतानामन-
भिद्रोहः १ प्राणवियोगप्रयोजकव्यापाररा-
हित्यमिति ग्रन्थान्तरे २ अशास्त्रीयप्राणि-
पीडनाभाव इति मतान्तरे ॥ ३५२ ॥

आकाङ्क्षा—अन्वयानुपपत्तिः *१* येन पदेन विना यस्य पदस्याऽन्वयबोधाऽजनकत्वं तेन तस्य समभिव्याहारः, यथा द्वारमित्यनेन पिधेहीत्यादेः, इत्यद्वैतग्रन्थे २ तादृशशाब्दबोधे तादृशशाब्दबोधाभाव इति माथुरी ३ समानविभक्तिकयोरभेदानुभवबलाद्विशेषणान्वितविभक्तेरभेदार्थकत्वमाकाङ्क्षात्वमिति चिन्तामणौ ४ अन्वयबोधसमर्थत्वे सत्यजनिततात्पर्यविषयान्वयबोधकत्वमिति ग्रं० ॥ २५८ ॥

आकाशम्—शब्दगुणकम् । असम्भववारणाय शब्दगुणोभयम् १ शब्दसमवायिकारणमिति ग्रं० *२* आवरणाभावाधिकरणम् ३ आवरणविरोध्यवकाशो वा *४* संयोगाजन्यजन्यविशेषगुणसमानाधिकरण

विशेषाधिकरणमिति स० द० सं० ॥३६३॥

आक्षेपः—स्वयमुक्तस्यार्थस्य किञ्चिन्निमित्तमभिसन्धाय प्रतिषेधः *१*समाननिर्वेद्यत्वमाक्षेपत्वम् ॥ ३६५ ॥

आख्यातत्वम्—सुविभक्तत्वे सति संख्याबोधकप्रत्ययत्वम् ॥ ३६६ ॥

आख्यानम्—पूर्ववृत्तकथनम् १. स्वयं दृष्टार्थकथनं वा ॥ ३६८ ॥

आख्यायकः—परोक्तस्यान्यत्र कथकः।३६९।

आख्यायिका—उपलब्धार्थबोधिका॥३७०॥

आगमप्रमाणम्—शाब्दप्रमाकरणम्१ आप्तोक्तार्थविषयिणी शब्दजन्या वृत्तिरिति ग्रं०

आचार्यः—मतप्रस्थापकः १ मन्त्रव्याख्याकृद्वा २ आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि, स्वयमप्याचरेद्यस्तु स आ-

चार्य इति स्मृतः २ स त्रिविधः 'चोदको-
दर्शयेन्मार्गं बोधकः स्थानमाचरेत्, मोक्ष-
दस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते ३७५

आज्ञा
आदेश } निकृष्टस्य भृत्यादेः कृत्यादौ प्र-
वृत्त्यर्थव्यापारः ॥ ३७६ ॥

आज्ञाकारी—आज्ञानुसारेणकर्मकर्त्ता ३७७

आज्ञाभङ्गः—स्वविषयेषु प्रचाराभावः ३७८

आत्मख्यातिः—विज्ञानात्मन एवाध्यस्तप-
दार्थाकारेण भानमिति विज्ञानवादिमते ।

आत्मघाती—व्यापादयेद्वृथात्मानं स्वयं यो
ऽग्न्युदकादिभिः, अवैधेनैव मार्गेण आ-
त्मघाती स उच्यते ॥ ३८० ॥

आत्ममदः—अहङ्कारभरितस्य विद्यादिभि-
र्मम समः को वेतिप्रज्ञाहेतुर्मदः ॥ ३८१ ॥

आत्मा—ज्ञानाद्यधिकरणम् १ अमूर्त्तसमवे-

तद्द्रव्यत्वापरजातिर्वेति तार्किकाः २ सर्व-
देहेषु पूर्णः ३ अहं प्रत्ययविषयो वेति वे-
दा० ४ 'यच्चाऽऽप्नोति यदादत्ते यच्चाति
विषयानिह, यच्चास्य सन्ततोभावस्तस्मा-
दात्मेति कथ्यते' ५ 'यदस्ति यद्भाति त-
दात्मरूपं नान्यत्ततोभाति न चान्यदस्ति,
स्वभावसंवित्प्रतिभाति केवला ग्राह्यं गृही-
तेति मृषैवकल्पना ॥ ३८६ ॥
आत्माश्रयत्वम्—स्वग्रहसापेक्षग्रहकत्व-
म् १ इतराव्यवधानेन स्वजनने कारणत्वे-
न स्वापेक्षणत्वं वेति वे० मते २ स्वापेक्षा-
ऽऽपादकप्रसङ्गत्वम्, यथा ज्वरोपसर्गयु-
क्तो रोगो ज्वर इत्युक्तौ, ज्वराज्ञानवन्त-
मुद्दिश्य ज्वरे लक्षणीये ज्वरज्ञानापेक्षायां
तदभावात्कथं ज्वरोपसर्गज्ञानं सम्भविष्य-

ति ३ स्वस्याऽव्यवहितस्वापेक्षित्वं वाऽन्यो न्याश्रयव्यावर्तनायाऽव्यवहितेति न्या. ।

आत्यन्तिकदुःखनिवृत्तिः—स्वा[1]धिकरण- दुःखप्रागभावासमानाधिकरणा दुःखनि- वृत्तिः ॥ ६९० ॥

आत्यान्तिकप्रलयः—ब्रह्मसाक्षात्कारनिमि त्तकत्वे सत्यज्ञानसहितसकलभावकार्यो- च्छेदः ॥ ३९१ ॥

आधारः—अधिकरणम् *१* अतद्रूपोपि तद्रूपेणारोप्य बुद्धौ स्फुरन्नेति स. शा. २ शबले संसृष्टतयाऽध्यस्तोऽधिष्ठानांश इति ग्रं० ३ अध्यस्तेन सहाभिन्नप्रतीतिविषयत्वमाधा- रत्वम् ॥ ३९८ ॥

---

१ यादृश्याद्दुःखनिवृत्तेरुत्तरं पुनर्दुःखा- न्तरं नोत्पद्यते तादृशी दुःखनिवृत्तिः ।

आधिदैविकतापः
आधिदैविकदुःखम् } देवान् यक्षरक्ष आदी-
न् दिवः प्रभवान् वातवर्षातपशीतोष्णा-
दीन् वाऽधिकृत्य निमित्तीकृत्य जायमान-
स्ता(नं दुःखम्) पः ॥ ३९६ ॥

आधिभौतिकतापः
आधिभौतिकदुःखम् } भूतानि–जरायुजाण्ड-
जस्वेदजोद्भिज्जरूपाणि चौरवैरिव्याघ्रश्विकक्कु-
क्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूकादंशमशक-
नक्रमकरवृक्षशिलाप्रभृतीनि चराचरजा-
तीयानि निमित्तीकृत्य जायमानस्ता (नं-
दुःखम्) पः ॥ ३९७ ॥

आध्यात्मिकतापः–शरीरमनसी अधि-
कृत्य जायमानस्तापः । स द्विविधः शा-
रीरो मानसश्चेति। वातपित्तश्लेष्मणां वैष-
म्यनिबन्धनो ज्वरादिराद्यः, परकर्तृकाप-

कारादिनिबन्धनः क्रोधादिर्द्वितीयः ।

आनन्दः–सात्त्विकैकाग्रबुद्धिप्रतिबिम्बितः सुखरूप आत्मा १ निरुक्तात्मप्रतिबिम्बिता वृत्तिर्वा २ ।निरुपाधिकेष्टत्वम् ॥४०१॥

आनन्दमयकोशः–सुखाकारवृत्तिमदन्तःकरणमज्ञानपर्यन्तम् १ आनन्दप्रचुरत्वे सति कोशवत्सत्यवस्तुनाच्छादकः॥४०३॥

आनुपूर्वत्वम्–पूर्वमनुक्रम्यत्वम् ॥४०४॥

आनुपूर्वित्वम्–तदुच्चारणानन्तरोच्चारणविषयत्वम् ॥ ४०५ ॥

आनुषाङ्गिकम्–उद्देश्यान्तरप्रवृत्तस्य तत्कर्मनान्तरीयतया प्राप्तम्, यथा भिक्षामटयन् यदि गां पश्यति तदा भिक्षार्थं प्रवृत्तस्य गोदर्शनम् ॥ ४०६ ॥

आपत्तिः–सम्यग्वर्त्तनोपायानुपलम्भः ४०७

आपातज्ञानम्—अज्ञाननिवृत्त्यसमर्थं ज्ञानम् १ अप्रामाण्यशङ्कास्पदज्ञानत्वमा०त्वम्

आप्तत्वम्—प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् १ लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वं वा ॥ ४१० ॥

आभिमुख्यम्—आनुकूल्यार्थसम्मुखीभवनम् ॥ ४११ ॥

आयुः—जीवितावच्छिन्नःकालः १ प्राणधारणानुकूलो व्यापार इति ग्रं० ॥ ४१२ ॥

आयुर्वेदः—आयुर्हिताहितं व्याधेर्निदानं शमनं तथा, विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते ॥ ४१४ ॥

आरम्भः—प्राथमिकव्यापारोपक्रमः *१* स्वार्थं परार्थं वा कुटीपुस्तकादिसम्पादन-

व्यापारः ॥ ४१६ ॥

आरम्भककारणम्-अनेककारणसंयोगवत्त्वे सति कार्यजनकं कारणम् ॥ ४१७ ॥

आरादुपकारकाङ्गम्-द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म ॥ ४१८ ॥

आरोपः-अतद्वति तत्प्रकारकज्ञानम् ॥ ४१९ ॥

आर्थीभावना-प्रयोजनेच्छाजनितक्रियाविषयव्यापारः ॥ ४२० ॥

आर्यावर्त्तः-विन्ध्यहिमाचलयोर्मध्यदेशः।

आलयविज्ञानम्-आलयं लयपर्यन्तस्थायि विज्ञानम् ॥ ४२२ ॥

आलस्यम्-प्रयत्नेन कर्तव्ये कार्ये श्रद्धावैधुर्येणोत्साहाभावः ॥ ४२३ ॥

आलापनत्वम्-परस्परकथोपकथनत्वम् ॥

आलिङ्गनम्-प्रीतिपूर्वकपरस्पराश्लेषः १

अङ्गेनाङ्गसंयोजनत्वमालिङ्गनत्वम् ॥४२६॥

आवरणत्वम्—अस्ति प्रकाशत इति व्यव-हारयोग्ये नास्ति न प्रकाशत इति व्यव-हारयोग्यत्वम् ॥ ४२७ ॥

आवरणशक्तिः—स्वाश्रयात्माद्यावरणानु-कूलमज्ञाननिष्ठं सामर्थ्यम् ॥ ४२८ ॥

आवृत्तिः-भूयएकजातीयक्रियाकरणम् *१*

स्वस्थानस्थितस्य पुनरनुसन्धानम् ॥४३०॥

आशा-इदं कृत्वेदं करिष्यामीति सङ्क-ल्पविकल्पप्रवाहानुपरमः ॥ ४३१ ॥

आशीर्वादमङ्गलम्—परमेश्वरात्स्वस्य स्व-शिष्यस्य वा वाञ्छितार्थप्रार्थनम् ॥४३२॥

आश्रयासिद्धत्वम्—पक्षतावच्छेदकाभा-ववत्पक्षकत्वम् ॥ ४३३ ॥

आसक्तिः—विषयान्तरपरिहारेणैकविषया

वलम्बनम् ॥ ४३४ ॥

आसत्तिः—यत्पदार्थेन सह यत्पदार्थस्यान्वयोपेक्षितस्तयोः पदयोरव्यवधानम् १ ग्रन्थान्तरे तु शक्तिलक्षणाऽन्यतरसम्बन्धेनाऽव्यवधानेन पदजन्यपदार्थोपस्थितिः। प्रमाणान्तरजन्यापदार्थोपस्थितिवारणाय पदजन्येति, लिङ्गविषयापदजन्यपदार्थोपस्थितिवारणाय शक्त्यादि, शक्तिलक्षणे निरूपिते व्यवहितपदजन्यपदार्थोपस्थितेः वारणायाव्यवधानेति ॥४३६॥

आसनम्—स्थिरसुखम् १ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम्, आसनं तद्विजानीयादन्यत्सुखविनाशनम्। सिद्धये सर्वभूतादि विश्वाधिष्ठानमद्वयम्, यस्मिन्सिद्धिङ्गताः सिद्धास्तत्सिद्धासनमुच्यते ॥

आसनफलत्वम्–द्वन्द्वानभिघातत्वम् ।४३९।
आसनोपायः—प्रयत्नशैथिल्यमनन्तसमापत्तिर्वा ॥ ४४० ॥
आस्तिकत्वम्–शास्त्राद्युक्तविषये विश्वासवत्त्वम् ॥ ४४१ ॥
आहार्यज्ञानम्–बाधकालीन(ने)मिच्छाजन्यम्, यथा माणवके प्रेम्णा चिंतामणिबुद्धिः
आहुतिः–देवोद्देशेन मन्त्रेणाग्नौ हविः क्षेपः

इ

इच्छा—इष्टसाधनताज्ञानजन्योऽभिलाषः
*१*इच्छापीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमतीति न्यायग्रन्थे ॥ ४४६ ॥
इतिहासः–पुरावृत्तप्रतिपादनम् १ धर्मार्थकाममोक्षाणामुपदेशसमन्वितत्वे सति पूर्ववृत्तकथायुक्तत्वमिति ग्रं० ॥ ४४७ ॥

इन्द्रजालम्—प्रत्यक्षतो मिथ्याऽर्थप्रदर्शनम् १ मन्त्रद्रव्यविशेषान्यतरसंयोगेनाद्भुतवस्तुदर्शकव्यापारत्वमिन्द्रजालत्वम् ॥४४९॥

इन्द्रियम्—सुखदुःखानुकूलसाक्षात्प्रमितिक्रियान्यतरकरणमतीन्द्रियम् । आलोकादावतिव्याप्तिवारणायातीन्द्रियमित्युक्तम्, धर्मादावतिव्याप्तिवारणायाद्यविशेषणम्, अनुमित्यादिकरणेऽतिव्याप्तिवारणाय साक्षादितीत्यद्वैतकौस्तुभे १ शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिति म०२ शं(आत्मान्यत्वे) शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । आत्मवा-

---

१ शब्देतरे ये उद्भूतविशेषगुणाः घटनिष्ठरूपादयस्तदनाश्रयत्वं ज्ञानस्य कारणभूतो यो मनःसंयोगस्तदाश्रयत्वं च चक्षुरादावस्तीत्यर्थः

रणाय सत्यन्तम्, कालादावतिव्याप्तिवार-
णाय विशेष्यमिति न्यायमुक्तावल्याम् ४५२

ई

ईर्ष्या—पराश्रियामसहिष्णुता १ परसम्पदु-
त्कर्षासहिष्णुत्वमिति ग्रं० ॥ ४५४ ॥

ईश्वरः—नित्यज्ञानाद्यधिकरणमिति न्या० १
अद्वैतमते तु मायाविशिष्टं चैतन्यम् २ मा-
याप्रतिबिम्बितं वा ३ समष्टिकारणशरीरो-
पहितं चैतन्यं वेति मतान्तरे ४ योगमते
तु क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषवि-
शेषः ५ त्रैकालिकबन्धशून्यत्वम् । बन्ध-
शून्यत्वमात्रोक्तौ मुक्तप्रकृतिलयेष्वतिव्या-
प्तिरिति त्रैकालिकत्वं बन्धविशेषणं तथा
च मुक्तेषु भूतबन्धस्य प्रकृतिलयेषु च भा-
विबन्धस्य सत्त्वान् न तत्रातिव्याप्तिरीश्व-

रस्य तु त्रैकालिकबन्धशून्यत्वादिति यो-
गमञ्जर्याम् ६ अङ्कुरादिरूपं कार्यं कर्तृ-
जन्यं कार्यत्वात् घटवत् ॥ ४६० ॥

ईश्वरप्रणिधानम्—सर्वकर्मणां भगवत्यर्प-
णम् १ भगवद्भक्तिर्वा ॥ ४६२ ॥

ईश्वराश्रयप्रमा—ईक्षणापरपर्यायस्रष्टव्यवि-
षयाकारमायावृत्तिप्रतिबिम्बिता चित् ४६३

उ

उच्चारणम्—कण्ठताल्वाद्यभिघातेन शब्दज-
नकव्यापारः ॥ ४६४ ॥

उत्तम्भकत्वम्—प्रतिबन्धकशक्तिरोधकत्वम्

उत्तरम्—दोषभञ्जनवाक्यम् १ जिज्ञासित-
विषयावेदकवाक्यं वा २ सिद्धान्तानुकूल-
तर्कोपन्यासत्वमिति पुस्तकान्तरे ॥४६८॥

उत्तरा—स्वापेक्षयामेरुसन्निहिता दिक् ४६९

उत्तरमीमांसा } उत्तरस्य वेदशेषभागस्य उ-
ब्रह्ममीमांसा }
पनिषद्रूपस्य मीमांसा पञ्चाङ्गन्यायोपेतवा-
क्यसमुदायात्मको विचारः ॥ ४७० ॥

उत्तेजकत्वम्—शक्त्यनुकूलत्वम् १ प्रतिब-
न्धकविद्यमाने सति कार्यजनकत्वं वेति
ग्रं० २ प्रतिबन्धकस्य प्रतिबन्धकत्वमिति
सांख्याः ३ प्रतिबन्धककोटिप्रविष्टाभावप्र-
तियोगित्वमिति प्राभाकराः ४ कारणी-
भूताभावप्रतियोगितावच्छेदकीभूताभावप्र-
तियोगित्वमिति न्या० ५ कारणाभावाति-
रिक्तकार्याभावप्रयोजकाभावप्रतियोगित्व-
म् ६ यद्वा, प्रतिबन्धकाभावेतरसकलसा-
धनसमवधाने कार्याभावप्रयोजकाभावप्र-
तियोगित्वमित्यद्वैतदीपिकायां पूर्वपक्षे ७

सामग्र्यां सत्यां कार्यानुत्पादप्रयोजकाभावप्रतियोगित्वमिति सिद्धान्ते ॥४७८॥

उत्पत्तिः
जनिः } उत्तरक्षणसम्बन्धः १ स्वकारणसंसर्गो वा २, कार्यस्याद्यक्षणसत्तासम्बन्धो वा ३, प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनमिति ग्रं० ४ स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसम्बन्ध इति बौद्धाधिकारे ॥ ४८३ ॥

उत्पत्तिविधिः—कर्मस्वरूपमात्रबोधकोविधिः, यथा आग्नेयोऽष्टाकपालो भवतीत्यादिः ॥ ४८४ ॥

उत्सवः—आनन्दजनकव्यापारः ॥ ४८५ ॥

---

१ सामग्र्यनन्तरकालीनो यः कार्यानुत्पादः तद्व्यतिरेकव्यापकव्यतिरेकप्रतियोगिनो योऽभावः तत्प्रतियोगित्वमित्यर्थः ।

उत्सा(सव)हव्यसनम्–नृत्यगीतादिदर्श-
नेच्छाहेतुर्व्यसनम् ॥ ४८६ ॥
उत्साहः–अन्यैरशक्यतयाऽवधृतेऽप्यवश्य-
कर्तव्यता बुद्धिः ॥ ४८७ ॥
उदासीनत्वम्–विवदमानयोरुभयोः (उपे)
प्रेक्षकत्वम् १ विवदमानयोरेकतरपक्षान-
वलम्बकत्वमुदासीनत्वम् ॥ ४८९ ॥
उदाहरणम्–साध्यसाधनव्याप्तिप्रदर्शक-
म् १ व्याप्तिप्रतिपादकदृष्टान्तवचनं वा २
दीधितिकारस्तु इतरार्थान्वितस्वार्थबो-
धकन्यायावयवत्वम् ॥ ४९२ ॥
उद्देशः–वस्तुप्रतिपादकनाममात्रम् १ ना-
ममात्रेण वस्तुसंकीर्त्तनम्, यथा द्रव्यगुण
इति पुस्तकान्तरे ॥ ४९४ ॥
उद्देश्यत्वम्–विधेयतानिरूपकत्वमिति न्या. १

मानान्तरप्राप्तत्वे सति विधेयान्वयित्वमिति मी० २ सिद्धप्रमितिविशिष्टतयासिद्धत्वमिति चित्सुखन्याम् ॥ ४९७ ॥

उद्भूतत्वम्–रूपादिविशेषगुणवृत्तिजातिविशेषः ॥ ४९८ ॥

उपकरणम्–प्रधानसाधकः १ उपक्रियतेऽनेन ॥ ४९९ ॥

उपकारः–सहकारिभिः कारणस्य कार्योत्पादनार्थमानुगुण्यम् ॥ ५०० ॥

उपकुर्वाणो ब्रह्मचारी–विवक्षयन्[1] गृहीतब्रह्मचर्यव्रतः ॥ ५०१ ॥

उपक्रमोपसंहारः- प्रकरणप्रतिपाद्यस्याद्यन्तयोः प्रतिपादनम्, यथा सदेव सौम्येदमग्र आसीदिति ॥ ५०२ ॥

---

१ विवक्षयन्=विवाहं करिष्यमाणः ।

उपचारः-शक्यार्थत्यागेनान्यार्थबोधनम् ५०२

उपजीवकत्वम्-इतरालम्बकत्वम् १ परम्परया साक्षाद्वा कार्यत्वं वा २ उपजीवति कारणाश्रितं भवतीति व्युत्पत्त्योपजीवकशब्दः कार्यपर इति परिभाषेन्दुशेखरे

उपजीव्यत्वम्-परम्परया साक्षाद्वा जनकत्वम् १ स्वसत्ताप्रयोजकत्वं वा २ स्वज्ञानप्रयोजकत्वं वा ३ उपजीव्यते कार्येणाश्रीयते इति व्युत्पत्त्योपजीव्यशब्दः कारणपरः ॥ ५०८ ॥

उपजीव्योपजीवकभावः-ज्ञानसत्त्वयोः प्रयोजकप्रयोज्यभावः, यथा एकस्यान्यसत्ताप्रयोजकत्वमपरस्य च तत्प्रयोज्यसत्ताकत्वम् । एवमन्यज्ञानप्रयोजकत्वमन्याधीनज्ञानाविषयत्वं च यथायथं प्रयोगा-

नुसारेण बोध्यम् ॥ ५०९ ॥

उपदेशः—हितकथनम् १ अपेक्षितार्थजात-स्य प्रतिपादको ग्रन्थसंदर्भो वा ॥ ५११ ॥

उपनयः—प्रकृतोदाहरणोपदर्शितव्याप्तिमद्धे-तुविशिष्टपक्षबोधकः ॥ ५१२ ॥

उपपत्तिः—प्रकरणप्रतिपाद्यार्थनिर्णायकम् १ प्रकरणप्रतिपाद्यस्य दृष्टान्तैः प्रतिपादन-म्, यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं वि-कारो नामधेयं मृत्तिकेत्येव सत्यमि-त्यादिना मृदादिदृष्टान्तैरद्वितीयवस्तुप्रति-पादनमित्यद्वैतकौस्तुभे ॥ ५१४ ॥

उपपादकत्वम्—उपपाद्याभावव्याप्याभाव-प्रतियोगित्वम् ॥ ५१५ ॥

उपपाद्यत्वम्—उपपादकाभावव्यापकाभा-

वप्रतियोगित्वम् ॥ ५१६ ॥

उपमर्दम्-पूर्वधर्मिविनाशनेन धर्म्यन्तरो-त्पादनम् ॥ ५१७ ॥

उपमा-कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुण-स्तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रे-ण यदुपसंयोज्य तद्गुणप्रकाशनम् ॥५१८॥

उपमानप्रमाणम्-सादृश्यप्रमाकरणम् १ उपमितिप्रमाकरणम् । कुठारादिवारणाय-मितीति, प्रत्यक्षादिवारणायोपेति ग्रं० २ व्यापारवत्तासम्बन्धेनोपमित्यसाधारणका-रणत्वमिति पु० ३ सदृशदर्शनादसन्निकृ-ष्टार्थज्ञानमिति मी० ४ संज्ञासंज्ञिसंबन्ध-प्रमाकरणमिति नै० ॥ ५२३ ॥

उपमितिप्रमा-संज्ञासंज्ञिसम्बन्धज्ञानम् । अ-नुमित्यादिवारणाय सम्बन्धेति, संयोगा-

दिवारणाय संज्ञासंज्ञीति न्या० १ (प-रोक्षधर्मिकम्) सादृश्यज्ञानजन्यं ज्ञानम् २ सादृश्यज्ञानादपरत्रासंनिकृष्टे सादृश्यज्ञानं वेति वे० ३ सादृश्यवैसादृश्यान्यतरधी-कारणिका इति खण्डनोद्धारे ॥ ५२७ ॥

उपमेयत्वम्—सादृश्यानुयोगित्वम् ॥ ८२८ ॥

उपयोगत्वम्—स्वजन्यावान्तरापूर्वद्वारेण निमित्तत्वम् ॥ ५२९ ॥

उपयोगी—इष्टसिद्धिसाधनानुकूलव्यापारः।

उपरतिः—कर्मादौ तत्साधने च दोषदर्शन-पूर्विका घृणा १ ज्ञानार्थविहितनित्याद्या-गमजन्यकर्मसंन्यासो वा ॥ ५३२ ॥

उपलक्षणत्वम्—स्वप्रतिपादकत्वे सति स्वे-तरप्रतिपादकत्वम् १ यद्वा, स्वार्थबोधकत्वे-

---

१ एतद्दृष्टगवयसदृशी मदीया गौरिति।

सतीतरार्थबोधकत्वम् २ वे० मते तु कादाचित्कत्वे सति व्यावर्त्तकत्वम् , यथा काकादिकं देवदत्तगृहादेः ॥ ५३५ ॥

उपलक्षितत्वम्—स्वसमानाधिकरणस्वोत्तरकालीनस्वप्रतियोगिकाभाववत्त्वसम्बन्धेन स्वसम्बन्धित्वम् ॥ ५३६ ॥

उपवासः—अहोरात्रभोजनाभावः ॥५३७॥

उपव्याख्यानम्—फलमाहात्म्योपासनप्रकारादिकथनम् ॥ ५३८ ॥

उपसंहारः—सामान्यप्राप्तस्य विशेषे नियमनमिति मी० १ एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपः, यथा गुणोपसंहारः ५४०

उपस्थः—स्वभावा (सुखक्रियासा) ऽऽनन्दसाधनमिन्द्रियम् ॥ ५४१ ॥

उपाख्यानम्—पूर्ववृत्तान्तकथनम् १ श्रुत-

स्यार्थस्य कथनं वा ॥ ५४३ ॥

उपादानकारणम्-कार्याभिन्नकारणम् १ कार्यान्वि(नुग) तं कारणं वा, यथा घटादेर्मृदादि । निमित्तकारणेऽतिव्याप्तिवारणायादिविशेषणम्, रूपादावातिव्याप्तिवारणाय द्वितीयम् २ स्वतादात्म्यापन्नकार्यजनकम् ३ स्वाभिन्नकार्यजनकं वा ४ वे० सि० लेशटीकायां तु कार्याधारत्वे सति कार्यजनिहेतुत्वम् । निमित्तकारणवारणाय सत्यन्तम्, भूतलादेरपिकार्याधारत्वात्तद्वारणाय विशेष्यदलम् ॥ ५४८ ॥

उपादेयत्वम्-आदानक्रियाविषयत्वम् ५४९

उपाधिः-स्वस्मिन्निव स्वसंसर्गिणि स्वधर्माऽऽसंजकः १ स्वान्वितांशविधेयानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम्-

पाधित्वम् । प्रथमसप्तम्यन्तेन नीलं घटं पश्ये-
त्यादौ नीलत्वादेरुपाधित्वनिरासः, का-
कैर्गृहं पश्येत्यादौ काकादेर्द्वितीयसप्तम्यन्तेन
निरासः, घटपटौ पश्येत्यत्र परस्परस्य
परस्परोपाधित्ववारणाय विशेष्यदलम् २
कार्यानन्वयित्वे सति व्यावर्तकत्वे सति
कार्यकाले नियमेन विद्यमानत्वम्, यथा
जपाकुसुमादिकं स्फटिके लौहित्योपाधिरि-
ति वे० सि० लेशटीकायाम् ३ उपसमीपे
स्थित्वा स्वीयं रूपमन्यत्रादधातीति वेदा-
न्तमते ४ साध्यव्यापकत्वे सति साधना-
व्यापकत्वमिति नैयायिकाः ॥ ५५८ ॥
उपाध्यायः-'एकदेशन्तु वेदस्य वेदाङ्गा-
न्यपि वा पुनः, योऽध्यापयति वृत्त्यर्थमु-
पाध्यायः स उच्यत इति भविष्ये ॥५५९॥

उपार्जनत्वम्-स्वत्वसंपादकव्यापारत्वम्।

उपास(नं)ना-निकृष्टेषूत्कृष्टबुद्धिः १ यद्वा चिन्तनापरपर्यायमननात्मिका मानसी (सव्यापारः) क्रिया २ वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रतन्त्रं मानसं प्रवाहरूपमिति ग्रं० ३ सा द्विविधा प्रतीकोऽहङ्ग्रहश्चेति लक्षणं तत्तच्छब्दे द्रष्टव्यम् ॥ ८८९ ॥

उपासनाकाण्डत्वम्-मन्त्रोदितार्थस्येतिकर्तव्यताबोधनत्वम् ॥ ८६० ॥

उपेक्षा-पापेषु सत्कारतिरस्कारयोरौदासीन्यम् १ परस्वत्वानभिसन्धानापूर्वकस्वत्वप्रागभावसमानकालीनस्वत्वाविषयकेच्छेति ग्रं०

उपोद्घातः-प्रतिपाद्य (प्रकृता) मर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनम्। प्रतिज्ञातवर्णनं व्यावर्तयितुमर्थान्तरेति, अ-

सम्बन्धार्थवर्णनव्यावृत्त्यर्थं तदर्थमिति, अग्निमानयमिति प्रतिज्ञाय धूमवत्त्वादिरर्थान्तरवर्णनं व्यावर्तयितुं प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्येत्युक्तम्, तावत्युक्ते बुद्धौ संगृह्य पश्चात्प्रतिज्ञाय यद्वर्णनं तस्योपोद्धातत्वं व्यावर्तयितुं प्रागेवेति तत्त्वदीपने १ प्रकृतोपपादकत्वमुपोद्धातत्वम् २ निर्दिष्टोपसाधकत्वं वेति ग्रं० ॥ ५६५ ॥

उभयकर्मजसंयोगः—स्वजनकक्रियाऽभाववदसमवेतसंयोगः ॥ ५६६ ॥

उल्लापः—शोकरोगादिना ध्वनिविकारः ५६७

उल्लेखः—इदं कर्त्तव्यमित्यादिना संकल्पितार्थप्रतिपादकशब्दोच्चारणम् ॥ ५६८ ॥

उल्लेखनम्—संकल्पितार्थकवाक्योच्चारणम्

---

१ शब्दप्रयोगात्प्रागेवेति ।

ऊ

ऊहः—पदान्तरेणाकाङ्क्षापूरणार्थाध्याहारः १ शिष्येणानुक्तस्याप्यूहनम् २ यद्वा, उपदेशसमसमयं शिष्यप्रतिपत्त्यनुकूलापूर्वयुक्तिकल्पनमित्यु० सा० टी० ३ अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वकत्वे सत्यन्वययोग्यविभक्त्यादिकल्पनम्, यथा पार्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनमिति श्राद्धतत्त्वटीकायाम् ४ प्रकृतावाम्नातस्य विकृतौ समवेतार्थत्वाय तदुचितपदान्तरस्य प्रक्षेपेण पाठ इति मी० ५७४

ऋ

ऋक्(चू)—यत्रार्थवशेन पादव्यवस्थितिरिति शास्त्रदीपिकायाम् १ नियताक्षरपादावसा-

ना २ पादबद्धगायत्र्यादिच्छन्दोविशिष्टम-
न्त्रो वा, यथा अग्निमीळे पुरोहितमि-
त्यादि इति मधुसूदनेनोक्तम् ॥ ६७७ ॥
ऋक्संहिता—अग्निमीळे इत्यादिकः (१०४
७२ मन्त्राः) ऋक्समुदायात्मकः ॥६७८॥
ऋग्वेदः—ऋग्बहुलो वेदः १ ऋगवयवको
वेदो वा २, ऋग्विनियोजको वेदो वा ३,
ऋग्द्रव्यको वेद इति न्यायसुधायां सोमे-
श्वरभट्टः ॥ ६८२ ॥
ऋणत्वम्—अवश्य (शोध्य) देयत्वम् ६८३
ऋषित्वम्—अतीन्द्रियार्थदर्शित्वम् १ ग्रन्था-
न्तरे मन्त्रद्रष्टृत्वम्, यथा वशिष्ठवामदेवादि ।

ए

एकत्वम्—प्रथमसंख्यान्वितत्वम् १ एकत्व-
संख्यायोगित्वं वा २, द्वित्वाद्यभाववत्त्वं

वा * ३ * सजातीयविजातीयस्वगतभेद-
शून्यत्वमिति वे० ग्रन्थे ॥ ५८९ ॥

एकदेशित्वम्–सिद्धान्तैकदेशाश्रयत्वे सति स्वतन्त्राधिकनिरूपकत्वम् ॥ ५९० ॥

एकवाक्यत्वम्–एकार्थबोधकानां शब्दानां मिथ आकाङ्क्षयैकस्यां बुद्धावारूढत्वम् १ भिन्नप्रतीतिविषयानेकमुख्यविशेष्यरहित-त्वसमानाधिकरणान्वीयमानपदार्थान्वयाभा-वप्रयुक्ताकाङ्क्षानिवृत्तिशून्यत्वं वा २ सा द्वि-धा–पदैकवाक्यता वाक्यैकवाक्यता चेति ल० तत्तच्छब्दे द्र० ॥ ५९२ ॥

एकाग्रभूमिः–एकविषयकधारावाहिकवृ-त्तिसमर्थम् ॥ ५९३ ॥

एकेन्द्रियवैराग्यम्–पक्वसर्वकषायज्ञानेन चित्तौत्सुकता १ यद्वा, इन्द्रियान्तरेषूप-

संहृतेष्वप्यनुपसंहृतस्य मनसो वृत्तिजिहासा

ऐ

ऐकान्तिकत्वम्-साधनानन्तरमवश्यं भावित्वम् ॥ ५९६ ॥

ऐतिह्यप्रमाणम्-विशेष्यानिर्णीतप्रथमप्रवक्तृकः शब्दविशेषः, यथात्र वटे यक्षः॥५९७

ऐश्वर्यम्-इच्छानभिघातात्मकत्वम् ॥५९८॥

औत्सुक्यम्-रमणीयफलसाधनेनोत्कटेच्छा १ कार्याकार्याविचारेण प्रवृत्ताऽऽह्लादविशेषो वेति गूढार्थदीपि० ॥ ६०० ॥

क

कथा-नानाकर्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यविस्तरः १ विश्वनाथस्तु नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसंदृब्धिः २ तत्त्वनिर्णयविजयान्यतरस्वरूप-

योग्यो न्यायानुगतवचनसंदर्भः । लौकिकविवादवारणाय न्यायेत्यादि ३ सा वाद-जल्पवितण्डाभेदेन त्रिधा ल० त० द० ॥ ६०३

कन्था-त्यक्तं वस्त्रं गृहस्थेन बहिः प्राक्षाल्य यत्नतः, सहस्रडोरका दृ (दृग्धा) ध्या सा कन्था च विधीयते ॥ ६०४ ॥

करणत्वम्-व्यापारवत्त्वे सत्यसाधारणकारणत्वम्, यथा छिदिक्रियां प्रति कुठारः । कालादिवारणायासाधारणेति, व्यापारेऽतिव्याप्तिवारणाय व्यापारवत्त्वे सतीति न्या० १ क्रियानिष्पादकत्वम् २ व्यापाराभिन्नत्वे सत्यसाधारणकारणत्वमिति वे० ग्रन्थे ॥

करणापाटवम्-इच्छाविषयीभूतवर्णाद्यननु-

---

१ करणम्-श्रोत्राद्यभिघातः तस्यापाटवम्-असामर्थ्यमित्यर्थः ।

कूलत्वमिति तर्कप्रकाशे श्रीकण्ठः॥६०८॥

करुणा–दुःखिषु दुःखप्रहाणार्थं दया १ परदुःखप्रहाणेच्छा वा ॥ ६१० ॥

कर्त्तव्यत्वम्–कर्त्तुं योग्यत्वम् १ कर्त्तुं उचितत्वं वा २ अवश्यं करणीयत्वं वा ६१२

कर्त्ता } क्रियायां स्वतन्त्रः(=कर्तुमकर्तु-
कर्तृत्वम् } मन्यथा वा कर्तुं समर्थः) १ क्रियाऽनुकूलकृतिमत्त्वं वा २ इतरकार(णा)काप्रयोज्यत्वे सति सकलकारकप्र(येरकत्वम्)योक्ता। कुठारादिकारकप्रयोक्तरि हस्तादावतिव्याप्तिवारणाय कारकाप्रयोज्यत्ववि-शेषणम् ३ अद्वैतमते तु ज्ञानचिकीर्षाप्रयत्नाधारः ४ (निखिलजगत्) उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं वा ६१८॥

कर्त्तृम्–कारकान्तरप्रवर्त्तनव्यापारः ॥६१९॥

कर्म–करणव्यापारवि(षयः)शेषः, यथा वास्यादिकरणव्यापारस्योद्यमननिपातनादेर्विषयः काष्ठादिः *१* संयोगविभागयोरनपेक्षकारणम्। अनपेक्षपदेन द्रव्यव्यावृत्तिः, संयोगविभागद्वयग्रहणेन संयोगविभागव्यावृत्तिरिति श्रीधरः २ संयोगभिन्नत्वे सति संयोगासमवायिकारणम्। हस्तपुस्तकवारणाय सत्यन्तम्, घटादिवारणाय विशेष्यदलम् ३ संयोगाजन्यसंयोगासमवायिकारणवृत्तिसंयोगत्वासमानाधिकरणजातिमदिति शिवादित्यमिश्राः ४ वेदान्तमते तु शुभाशुभक्रियाजन्यमदृष्टम्, तच्च पुण्यपापमिश्रितमिति ५ ल० तत्तच्छब्दे द्र० ५प्रकारान्तरे तु शुभाशुभादृष्टजनको व्यापारः, तच्च नि-

सनैमित्तिककाम्यप्रायश्चितनिषिद्धश्चेति ल०
तत्तच्छब्दे द्र० दि धात्वर्थतावच्छेदकपरसम
वेतक्रियाफलशालित्वं कर्मत्वम् ॥६२६॥
कर्मकाण्डम्—कर्मणां कर्त्तव्यताप्रतिपादकं
काण्डम् १ द्रव्यदेवताद्यर्थस्मारको वा ६२८
कर्मधारयसमासः—तुल्यविभक्तिलिङ्गयो-
रुभयोः पदयोः समानाधिकरणः, यथा
कृष्णमृगः श्वेतपताका इत्यादि ॥ ६२९॥
कर्मेन्द्रियम्[2]—अपञ्चीकृतपञ्चमहाभूतकार्य-
त्वे सति वचनादिक्रियासाधनम् ॥६३०॥
कल्पः—मन्त्रार्थसामर्थ्यप्रकाशकः १ य(या-

---

१ अपादानव्यतिरिक्तत्वे सति परसमवे तक्रियाफलभागित्वमित्यर्थः।

२ कर्म-वदनादिव्यापारः, तत्करणमिन्द्रियमित्यर्थः।

गप्रयोगप्रति)ः ञ्पात्रनिर्माणप्रकारप्रतिपादकं शास्त्रं वा, यथा कात्यायनमाश्वलायनमापस्तम्बीयमित्यादि ॥ ६३२ ॥

कल्पना—अविद्यमानपदार्थस्य अन्यत्र स्थितस्य अन्यत्रप्रतिभासरूपः मानसव्यापारः

कषायः—चित्तस्य रागादिना स्तब्धीभा (वादखण्डनखण्डनालम्बनम्) वः ॥६३४॥

काणत्वम्—चक्षुरिन्द्रियशून्यैकगोलकत्वमिति वाचस्पति बृहदभि० ॥ ६३५ ॥

कादाचित्कत्वम्—सत्त्वे सति किञ्चित्कालवृत्त्यभावप्रतियोगित्वम् १ प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरत्वमिति ग्रन्थान्तरे ॥ ६३७ ॥

कामः—इष्टविषयाभिलाषः १ स्त्र्यादिविषयकोऽभिलाषो वा २ स्त्रीपुंसव्यतिकरतृ-

ष्णोति ग्रं० २ आत्मनोऽनुकूलेषु सुखहे-
तुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु
वा तद्गुणानुसन्धानाभ्यासेन योरत्या
त्मकोगर्धःसः ४ स बाह्यान्तरवासना-
मात्रभेदेन त्रिविधः—उपार्जितमोदकादिषु
आद्यः, आशामोदकादिषु द्वितीयः, पथि-
पतिततृणादिवदापाततः प्रतीतेषु वासना-
रूपश्चेति । दमश्च निःसङ्कल्पश्च कामं शि-
थिलीकरोति; पक्षान्तरे ब्रह्मचर्येण वस्तुवि-
चारेणास्य निवृत्तिः। काम्यते जनैरिति६४१
काम्यत्वम्—तत्तत्फलकामनावदाधिकारि-
कर्त्तव्यत्वम् ॥ ६४२ ॥
काम्यकर्म—स्वर्गादीष्टसाधनम् १ स्वर्गा-
दिफलकामनावदाधिकारिकर्त्तव्यं वा यथा
ज्योतिष्टोमादि ॥ ६४४ ॥

कायत्वम्–देहव्यापित्वगिन्द्रियत्वम्॥ ६४५॥
कायव्यूहत्वम्–योगिरचितयुगपदनेकशरीरत्वम् ॥ ६४६ ॥
कारकम्-व्यापारवत्कारणम् १ क्रियाजनकम् २ क्रियाजनकशक्तिमत्त्वम्॥६४७॥
कारणत्वम्–कार्यसहभूतत्वे सत्यनन्यथासिद्धनियतपूर्ववृत्ति (जातीय) त्वम्। अनियतरासभादिवारणाय नियतेति, कार्यवारणाय पूर्वेति, दण्डत्वादिवारणायानन्यथासिद्धेति १ कार्याव्यवहितप्राक्क्षणावच्छेदकत्वे सति कार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमितिपुस्तकान्तरे २ तद्द्विविधमुपादानकारणं निमित्तकारणञ्चे-

---

१ पूर्ववृत्तित्वं नाम कार्यप्रागभावाधिकरणक्षणवृत्तित्वम्।

ति, प्रकारान्तरे साधारणमसाधारणञ्चे-
ति ल० तत्त्व० [ ५६–८२ पृष्ठे ] द्र०

कारिका–अल्पाक्षरत्वे सति बह्वर्थज्ञापकः
श्लोकः ॥ ६५२ ॥

कार्यत्वम्–प्रागभावप्रतियोगित्वम्। काला-
दिवारणाय प्रागिति, असम्भववारणाय
प्रतियोगीति नै० १ कृतिसंसृष्टत्वम् २
कृतियोग्यत्वे सत्यलौकिकत्वं वेति मी० ३
वर्तमानावस्थोपपादनत्वमिति यो० ४ वे-
दान्तमते कारणत्वाभिमतवस्त्वभिन्नत्व-
म् ५ कृतिसाध्यत्वे सति कृत्युद्देश्यत्वमि-
ति चि० ६ कालत्रयानन्वितत्वे सति प्र-
वृत्त्यभावविरोधित्वमिति सं० शा०टी० ७
नियतपश्चाद्भावित्वमिति वे० मु० टी० ८
आद्यक्षणसम्बन्धित्वमिति केचित् ॥६५१॥

कार्याध्यासत्वम्–दोषादिप्रयजन्यज्ञान-
विषयत्वमिति रत्नप्रभायाम् ॥ ६६२ ॥
कालः–अतीतादिव्यवहारासाधारणं कार-
णम् १ विभुत्वे सति दिगसमवेतपरत्वास-
मवायिकारणाधिकरणमिति मु० २ स भूत
भाविवर्तमानभेदेन त्रिविधः ल० तत्त्व०
कालपरिच्छेदः–यत्किञ्चित्कालावृत्तित्वं १
ध्वंसप्रागभावप्रतियोगित्वम् ॥ ६६६ ॥
काव्यम्–रमणीयार्थप्रतिपादकः शब्द इति
पण्डितराजः १ रसात्मकं वाक्यमिति द-
र्पणे २ आनन्दविशेषजनकवाक्यमिति
रसगङ्गाधरः ३ अर्थदोषशून्यत्वे सति
व्याकरणादिदोषरहितत्वम् ॥ ६७० ॥
काष्ठमौनम्–इङ्गितेनापि स्वाभिप्रायाप्र-
काशनम् १ काष्ठमिव मौनम् ॥ ६७१ ॥

किन्तु—पूर्ववाक्यसङ्कोचज्ञापनम् १ प्रागुक्तविरुद्धार्थं वा ॥ ६७३ ॥

कुम्भकप्राणायामः—अन्तःस्तम्भवृत्तिः १ पीतस्य वायोश्चतुःषष्टिमात्राभिरायमनमिति वे० सि० आदर्शे ॥ ६७५ ॥

कृतघ्नत्वम्—कृतोपकारस्यापकारकत्वम् ॥

कृतज्ञत्वम्—कृतोपकारज्ञातृत्वम् ॥६७७॥

कृतनाशः—कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः ॥ ६७८ ॥

कृतोपास्त्यधिकारी } मुख्याधिकारी } उपास्यसाक्षात्कारपर्यन्तोपास्तिः ॥ ६७९ ॥

कृपा—स्वार्थमनपेक्ष्य परदुःखप्रहारणेच्छा ॥

केवललक्षणा—शक्यसाक्षात्सम्बन्धः। सा-जहदजहज्जहदजहद्भेदेन त्रिविधा ल० तत्त०

[१०-११४ पृष्ठे] द्रष्टव्यम् ॥ ६८१ ॥

केवलव्यतिरेकित्वम्—अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वम् ॥६८२॥

केवलान्वयित्वम्—अत्यन्ताभावाप्रतियोगित्वम् १ अत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वं वा ॥ ६८४ ॥

कैवल्यम् }
निःश्रेयसम् } विद्यया निरस्ताऽविद्यातत्कार्यब्रह्मभावापत्तिः ॥ ६८५ ॥

कोशः—शब्दार्थप्रतिपादकः १ शब्दार्थनिर्वचनपरिज्ञानं वा *२* असिकोशवदात्माच्छादकत्वं कोशत्वम् ३ स चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयभेदात्पञ्चविधः ल०तत्त्वज्ञ०[३०-६४ पृष्ठे]द्र०६८८

कौपीनम्-पुरुषलिङ्गावरको वस्त्रखण्डः १

कुत्सितस्य पीनस्य मांसस्यावरणं वा २ एकहस्तमविस्तारं करद्वन्द्वसमायतम्, त्रिलम्बिततृतीयांशं गुह्याच्छादनमीरितमिति सिद्धान्तशेखरे ॥ ६९१ ॥

क्रमः–चिन्त्यमानार्थसम्प्राप्तिः *१* पौर्वापर्यरूपः २ पूर्वापरावस्थानं वा *३* पूर्वाप रसामर्थ्यहेतुकव्यापारः ॥ ६९६ ॥

क्रिया–करणव्यापारनिष्पाद्या १ संयोगविभागयोरसाधारणो हेतुर्वा ॥ ६९७ ॥

क्रीडा–बाह्यसाधनसापेक्षा ॥ ६९८ ॥

क्रोधः–परानिष्टाभिलाषः १ अनिष्टविषयद्वेषहेतुको वा २ कामितार्थविघातजन्यो बुद्धिक्षोभ इति ग्रं० ३ आत्मनः प्रतिकूलेषु दुःखेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तत्तद्दोषानुसन्धानाभ्यासेन

यः प्रज्वलनात्मको मन्युः स इति म-
धुसूदन्याम् ४ दययाऽहिंसया क्षमया वा
क्रोधस्य निवृत्तिः ॥ ७०२ ॥

क्लेशः—बाधनालक्षणः १ अविद्याद्यन्यतम-
त्वं क्लेशत्वम् ॥ ७०४ ॥

क्षणः—निमेषक्रियावच्छिन्नस्य कालस्य च-
तुर्थो भाग इति योगमते १ स्वाधेयपदा-
र्थप्रागभावानाधारः समय इति बौद्धा-
धिकारे ॥ ७०६ ॥

क्षणिकत्वम्—स्वाधिकरणसमयप्रागभावा
धिकरणक्षणानुत्पत्तिकत्वे सति कादाचि-
त्कत्वम् १ स्वाधिकरणसमयप्रागभावाधि-
करणावृत्तित्वमिति तु न्यायः, इति बौ०
रघुनाथः २ तृतीयक्षणावृत्तिध्वंसप्रतियो
गित्वम् । घटादिव्यावृत्तये तृतीयक्षणा-

वृत्तीति गदाधरः २ तृतीयक्षणवृत्त्य-
वृत्तिजातिमद्विशेषगुणवत्त्वमिति ग्रं० ४ क्ष-
णान्तरासम्बन्धित्वे सति क्षणसम्बन्धि-
त्वम् ५ क्षणान्तरसम्बन्धित्वात्यन्ताभावा-
धिकरणत्वे सति क्षणसंबन्धित्वं वा ६ उ-
त्पत्तिक्षणानन्तरक्षणवर्त्तिध्वंसप्रतियोगि-
त्वमिति केचित् ॥ ७१३ ॥

क्षत्रियविशोर्विद्वत्संन्यासः—अपरोक्षा-
त्मविद्विहितत्वे सति ससाधनत्रैधाखिल-
कर्मसु निष्फलत्वबुद्धिदार्ढ्येन तदास्था-
राहित्यम् ॥ ७१४ ॥

क्षमा—आकृष्टस्य ताडितस्य वाऽविकृत-
चित्तता १ सत्यपि सामर्थ्ये परिभवहेतुं प्र-
ति क्रोधस्यानुत्पत्तिर्वा २ आकुष्टोऽभिहतो
यस्तु नाक्रोशेन्न हनेदपि अदुष्टैर्वाङ्मनः

कायैस्तितिक्षुश्च क्षमा स्मृता ॥ ७१७ ॥

च्यतापः–पुण्यकर्मक्षये पतनभीतिजन्यस्तापः ॥ ७१८ ॥

क्षेपकः–विक्षेपकर्तरि ग्रन्थकृदकृतांशस्य तद्ग्रन्थमध्ये सन्निवेशकः ॥ ७१९ ॥

क्षेमः–स्थितरक्षणम् १ लब्धप्रतिपालनं वा ॥

## ख

खण्डनम्–शब्दार्थानिर्वचनीयताप्रतिपादकम् १ परमतपदार्थनिराकरणत्वे सति स्वमतदोषपरिहारः ॥ ७२३ ॥

खण्डप्रलयः–जन्यद्रव्यानधिकरणकालः ।

खानपानम्–कठिनद्रवद्रव्ययोर्गलाधःकरणम् ॥ ७२५ ॥

खिलकाण्डत्वम्–कर्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्यदुक्तव्यमवशिष्टं तस्य सर्वस्या-

भिधानेन प्रकीर्णत्वमिति वै०आ०सा०भा०

ख्यातिः—भ्रमज्ञानम् १. सा पञ्चधा—आत्मख्यातिरसत्ख्यातिरख्यातिरन्यथाख्यातिरनिर्वचनीयख्यातिश्चेति ल० तत्त्वच्छ० [९-२३-३१-८४-६० पृष्ठे] द्र० ॥७२७॥

## ग

गन्धः—घ्राणग्राह्यो गुणः । गन्धत्वादावतिव्याप्तिवारणाय गुण इति, रूपादावतिव्याप्तिवारणाय घ्राणग्राह्य इति १ पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम् ॥ ७२९ ॥

---

१ घ्राणभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति घ्राणजन्यप्रत्यक्षविषयत्वमित्यर्थः ।

२ ग्राह्यत्वं नाम लौकिकप्रत्यक्षस्वरूपयोग्यत्वम् ।

गमनम्–अनियतोत्तरदेशसंयोगासमवायिकारणं कर्म ॥ ७३० ॥

गर्वः–अभिमानात्मिका चित्तवृत्तिः॥७३१॥

गाथा–सुभाषितत्वेन सर्वैर्गीयमाना॥७३२॥

गीतम्–स्वरतालग्रामभेदरागरागाङ्गभूषितम्, संस्कृतं वा प्राकृतं वा गीतं गीतविदोविदुः ॥ ७३३ ॥

गुणः–द्रव्यकर्मभिन्नत्वे सति सामान्यवान् । द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम्, सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् १ निर्गुणत्वे निष्क्रियत्वे च सति सामान्यवानिति किरणावल्याम् २ संयोगाजन्यसंयोगासमवायिकारणवृत्तिसंयोगासमानाधिकरणजातिमानिति शि० मिश्रः ३ नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्या-

व्यजातिमत्त्वं गुणत्वमिति सूत्रवृत्तौ॥७३७॥

गुणवादः-प्रमाणान्तराविरोधे सत्यर्थवादः१ मानान्तराविरुद्धार्थम (ज्ञापकः शब्दः) तिपादकत्वं गुणवादत्वम्, यथा आदित्यो यूप इत्यादि ॥ ७३९ ॥

गुणोपसंहारः-भिन्नशाखागतानां गुणानामङ्गानां विशेषणानां वा एकबुद्ध्युपारोहणमित्यात्मपु० टिप्पण्याम् ॥ ७४० ॥

गुरुत्वम्-हितोपदेष्टृत्वम् १ संशयापनोदकत्वं वा २ गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः, अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते *३* आद्यपतनासमवायिकारणत्वम् । दण्डादिवारणायासमवायीति, रूपादिवारणाय पतनेति,

१ पतनं नाम अधः संयोगानुकूलक्रिया।

वेगेऽतिव्याप्तिवारणायाद्येति ४ स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वमिति ग्रं० ॥ ७४५ ॥

गृहस्थाश्रमः–वैवाहिकेन विधिना कृतपत्नीपरिग्रहः (श्रौतस्मार्तकर्मानुष्ठानपरः) स चतुर्विधः–वार्ताको यायावरः शालीनो घोरसंन्यासिकश्चेति ॥ ७४६ ॥

गोचरः–ज्ञाननिरूपितो विषयः ॥ ७४७ ॥

गोत्वम्–गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वम् ॥ ७४८ ॥

गोत्रम्–पुत्रपौत्रप्रभृतिकमपत्यम् ॥७४९॥

गौणप्रयोजनत्वम्–अन्येच्छाधीनेच्छाविषयत्वमिति मुक्तिवादे गद० ॥७५०॥

गौणीवृत्तिः–गुणमधिकृत्य प्रवृत्ता १ लक्ष्यमाणगुणयोगेन स्वार्थादन्यत्र वृत्तिर्वा

यथा सिंहो माणवक इत्यादौ ॥ ७५२ ॥

ग्रन्थः—अलौकिकैकप्रयोजनोद्देशेन प्रवृत्त-वाक्यसमुदायः ॥ ७५३ ॥

ग्रहणम्—शिष्यकृतप्रश्नाक्षेपवाक्यार्थानां सद्योऽवधारणसामर्थ्यम् ॥ ७५४ ॥

ग्रामः—हट्टादिशून्यवसतीति श्रीधरः १ विप्रादिवर्णमाया प्राकारपरिखाऽऽदिरहिता बहुजनवसतीति भरतः ॥ ७५६ ॥

घ

घटत्वम्—स्वाश्रयघटाभिन्नाधिकरणाऽवृत्ति-जातिः ॥ ७५७ ॥

घटकत्वम्—प्रत्येकविषयताव्यापकविषयता-निरूपकत्वम् ॥ ७५८ ॥

घटितत्वम्—समुदायविषयताव्याप्यविषय-तानिरूपकत्वम् ॥ ७५९ ॥

घ्राणम्–गन्धोपलब्धिसाधनमिन्द्रियम् । चक्षुरादावतिव्याप्तिवारणाय गन्धोपलब्धिरिति, कालादावतिव्याप्तिवारणायेन्द्रियमिति ॥ ७६० ॥

## च

चक्रकदोषः
चक्रकत्वम् } त्रितयादिसिद्धावन्यवधानेन त्रितयाद्यपेक्षा १. पूर्वस्य पूर्वापेक्षितमध्यमापेक्षितोत्तरापेक्षितत्वम् २ स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनप्रसङ्गत्वमिति तर्कशास्त्रे २ स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहकत्वमिति वे० ॥ ७६४ ॥

चक्षुः–रूपोपलब्धिसाधनमिन्द्रियम् ॥७६५॥

चरमत्वम्–स्वसजातीयशरीरप्रागभावानधिकरणत्वम् ॥ ७६६ ॥

चान्द्रायणो विधिः-एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्, इन्दुक्षये न भुञ्जीत एष ॥ ७६७ ॥

चार्वाकत्वम्-बृहस्पतिशिष्यत्वे सति देहात्मवादित्वम् ॥ ७६८ ॥

चिकित्सा-व्याधिनिवारणो व्यापारः७६९

चिकीर्षा-सम्पादनेच्छा १ प्रवृत्तिहेतुरिच्छा वा ॥ ७७१ ॥

चित्तम्-अनुसन्धानात्मकवृत्तिमदन्तःकरणम् ॥ ७७२ ॥

चिदाभासः-चित्प्रतिबिम्बः १ चिल्लक्षणरहितत्वे सति चिद्वद्भासमानत्वम् ॥ ७७४ ॥

चेष्टा-हिताहितप्राप्तिपरिहारार्था क्रिया १ शरीरतदवयवसमवेता या काचिद्विशिष्टा

क्रिया इति ग्रं० ॥ ७७८ ॥

छ

छन्दः-नियताक्षरवर्णमात्रादिप्रतिपादकग्रन्थः १ लौकिकवैदिकशब्दान् छन्दयति नियमयति प्रतिपादयति विरामादिव्यवस्थापको ग्रन्थ इति पु० २ वेदाङ्गत्वे सति छन्दसो (वेद) व्याख्यानत्वं छन्दस्त्वम् ॥ ७७९ ॥

छलम्-विपरीतार्थकल्पनोपपत्त्या वचनविघातः१ वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानम्, यथा नवकंबलोऽयं देवदत्तः २ शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुरिति ग्रं०

ज

जटः-अपरिच्छिन्नासंभ्यवदनपर इति मैत्र्यु-

१ असभ्य नाम सभायामनुपयुक्तः ।

प० टीकायां रामतीर्थः ॥ ७८३ ॥

जडः–वेदग्रहणासमर्थः *१* अस्वप्रकाशत्वं जडत्वम् ॥ ७८५ ॥

जनकत्वम्–अनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वम् ॥ ७८६ ॥

जन्म / जननं } आत्मनि देहसम्बन्धः १ आद्यशरीरप्राणसंयोगो वेति नै० २ अपूर्वशरीरेन्द्रियादिसम्बन्धः ३ स्वादृष्टोपनिबद्धशरीरग्रहणं वेति वे० ४ निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्ध इति सां० ॥ ७९१ ॥

जयः–शत्रुपराङ्मुखीकरणम् ॥ ७९२ ॥

जल्पः–उभयपक्षस्थापनवती विजिगीषु(ण) कथा १ परमतनिराकरणत्वे सति स्वमत-

स्थापनरूपा विजिगीषोः कथेति ग्रं० ७९४

जहदजहल्लक्षणा—वाच्यार्थैकदेशत्यागेनै-
कदेशवृत्तिः ॥ ७९५ ॥

जहल्लक्षणा—शक्यार्थमनन्तर्भाव्यत्वे स-
त्यर्थान्तरप्रतीतिः, यथा विषं भुंक्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिरिति धर्मराजमते १ शक्यमात्रपरित्यागेन त-त्संबन्ध्यर्थान्तरे वृत्तिः, यथा गङ्गायां घोष इति गङ्गापदस्य तीरे। अजहल्लक्षणायामति-व्याप्तिवारणाय शक्यमात्रपरित्यागे-नेति साम्प्रदायिकाः २ लक्ष्यतावच्छेद-करूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा इति नैयायिकाः ॥ ७९८ ॥

जाग्रज्जाग्रत्—प्रमाज्ञानत्वम् ॥ ७९९ ॥

जाग्रत्सुषुप्तिः—जाग्रदवस्थायां श्रमादिना-

स्तब्धीभावः ॥ ८०० ॥

जाग्रत्स्वप्नः—शुक्तिरजतादिभ्रमः॥८०१॥

जाग्रदवस्था
जागरितम् } इन्द्रियजन्यान्तः करणवृत्त्यवस्था १ यद्वा, दिगाद्यधिष्ठातृदेवतानुगृहीतैरिन्द्रियैः शब्दादिविषयानुभवावस्था। स्वप्नेऽतिव्याप्तिव्यावृत्त्यर्थं दिगादीत्युक्तम्, सुषुप्तावतिव्याप्तिव्यावृत्त्यर्थमुक्तं शब्दादीति २ इन्द्रियैरर्थोपलब्धिः। सुषुप्तिव्यावृत्त्यर्थमर्थपदम्, स्वप्नंनिरासितुमिन्द्रियविशेषणम् ३ सा त्रिधा—जाग्रज्जाग्रज्जाग्रत्स्वप्नोजाग्रत्सुषुप्तिश्चेति ॥ ८०४ ॥

जातिः—अनुगतबुद्धिव्यवहारहेतुभूता १

---

१ अनुगतबुद्धिव्यवहारहेतुभूतं परसामान्यं सत्तेत्याख्यायते।

अनिर्वचनीयबहुपदार्थघटितधर्मान्यतरधर्म-
रूपोपाधिभिन्नत्वे सति नित्यत्वे सत्यनेक-
व्यक्तिवृत्तिधर्मत्वं जातित्वम् । घटादौ व्य-
भिचारनिरासाय नित्यत्वे सतीत्युक्तम्,
अखण्डोपाधिरूपाभावत्वादौ व्यभिचार-
निरासायोपाधिभिन्नत्वे सतीति, न-
लपरमाणुरूपादौ व्यभिचारनिवृत्तयेऽनेक-
व्यक्तिवृत्तिधर्मत्वमिति चूडामणिटी-
कायाम् २ मनस्त्वात्मातिरिक्तनित्यमात्र-
समवेतान्यत्वे सति समवेतसत्तानाश्रय
इति क्षि० मिश्रः ॥ ८०७ ॥

जात्युत्तरम्—स्वव्याघातकमुत्तरम् १ अ-
सदुत्तरं वा २ सन्दर्भेण दूषणासमर्थं वा ३
छलादिभिन्नदूषणसमर्थमुत्तरं वा ॥८११॥

जिज्ञासा—ज्ञातुमिच्छा १ अज्ञातादिबुद्धि-

सिद्धये प्रवर्त्तिका इच्छा वा ॥ ८१३ ॥

जिज्ञासुः-ज्ञातुमिच्छुः १ आत्मज्ञानार्थी मुमुक्षुः ॥ ८१५ ॥

जितेन्द्रियः-श्रुत्वा स्पृष्ट्वाथ दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः, न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ८१६ ॥

जीवः-सुखादिसमवायिकारणमिति न्या० १ अविद्योपहितम् २ अविद्यावच्छिन्नं वा ३ अविद्याप्रतिबिम्बितं वा ४ चैतन्यं वा ५ यद्वा, अन्तःकरणोपहितम् ६ अन्तःकरणावच्छिन्नं वा ७ अन्तःकरणप्रतिबिम्बितं वा ८ चैतन्यं वा जीवः ९ मतान्तरे व्यष्टिस्थूलसूक्ष्मकारणशरीरत्रयोपहितः १० स च विश्वतैजसप्राज्ञभेदात्त्रिविधः ल० तत्तच्छब्दे द्र० ॥ ८२६ ॥

जीवनम्—प्राणधारणानुकूलो व्यापारः।

जीवन्मुक्तः—स्वस्वरूपज्ञानेनाज्ञानतत्कार्य-सञ्चितकर्मसंशयविपर्ययादौ बाधिते सत्यखिलबन्धरहितः १ स्वास्मिन्स्वदृष्ट्याऽध्यासाप्रतिभासे सति यावत्प्रारब्धं बाधितचित्तादिमत्त्वं जीवन्मुक्तत्वम् २ स्वतः परतश्च व्युत्थानाव्युत्थानरूपपञ्चमीषष्ठ्यादिभूमिकावत्त्वमिति ग्रं० ॥ ८३० ॥

जीवन्मुक्तिः—स्वास्मिन्स्वदृशा(ष्ट्य)सतताध्यासाप्रतिभासे सति यावत्प्रारब्धं स्वाचित्ताद्यवस्थितिः। अज्ञसमाधौ लोकदृष्ट्याऽध्यासाप्रतिभासे सर्वत्र चित्ताद्यवस्थितिरस्तीति तत्रातिव्याप्तिवारणाय स्वास्मिन्स्वदृशेति, तत्त्वज्ञानोत्तरक्षणिकदृश्यभावे व्यभिचारवारणाय सततेति पदम्, स्व-

पद्मादिपदं च क्रमात्कस्य चिज्जीवन्मुक्ति-सत्त्वे कस्मिंश्चिदङ्गे यावत्प्रारब्धं चित्ता-द्यवस्थितिसत्त्वात्तत्रातिव्याप्तिस्तथा व्यु-त्थितस्थितप्रज्ञे चक्षुरादिसत्त्वात्तत्रातिव्या-प्तिरिति तयोर्व्यावृत्त्यै इति जी० वे० टी-कायाम् १ श्रवणादिभिरुत्पन्नसाक्षात्कारस्य विद्वत्संन्यासिनः कर्तृ२त्वाद्यखिलबन्धप्रति भासनिवृत्तिरित्यद्वैतकौ० ॥ ८३२ ॥

जीवाश्रया प्रमा–अनधिगताबाधितविष-याकारान्तःकरणवृत्तिप्रतिबिम्बिता चित् । भ्रान्तिज्ञानेऽतिव्याप्तिवारणायाबाधिते-ति, स्मृतावतिव्याप्तिरत उक्तमनधिगतेति ।

---

१ जीवदवस्थायामिति शेषः, अन्यथा विदेहमुक्तावतिव्याप्तेः ।

२ कर्तृत्वम्–कायिकादिचेष्टानुष्ठातृत्वम् ।

ज्ञानत्वम्-ज्ञानभास्यत्वम् १ ज्ञाननिव-
र्त्याज्ञान(ना)विषयत्वं वा ॥ ८३५ ॥

ज्ञाता-विषयचैतन्याभिव्यञ्जकान्तःकरण-
ज्ञानयोः परिणामात्मकवृत्त्युपहितं चैतन्यम् ।

ज्ञानगतापरोक्षम् } तत्तद्व्यवहारानुकूलचैत-
ज्ञानगतप्रत्यक्षम् }

न्यस्य तत्तदर्थभेदः १ अपरोक्षार्थगोच-
रव्यवहारजनकत्वयोग्यज्ञानत्वं ज्ञानगतप्र-
त्यक्षत्वमित्यद्वैतविद्याचार्यः २ स्वाविषयवि-
षयकज्ञानाजन्यज्ञानत्वम् । विशेषणज्ञानज-
न्यविशिष्टज्ञानेऽव्याप्तिवारणाय स्वावि-
षयविषयकेति ब्रह्मविद्याभरणे ३ अयो-
ग्यप्रमाणाजन्यत्वे सति वर्तमानयोग्यवि-
षयचैतन्याभिन्नत्वमिति प० ॥ ८४० ॥

ज्ञानम्–विषयचैतन्याभिव्यञ्जकान्तःकरणाज्ञानयोः परिणामरूपावृत्तिः १ प्रत्यगात्मनि देहाद्यतिरिक्तत्वप्रकारको, देहादौ वा प्रत्यगात्मातिरिक्तत्वप्रकारको निश्चयः २ जीवब्रह्मणोरभेदनिश्चय इति ग्रं० ४ अर्थप्रकाशत्वं ज्ञानत्वम् ५ तद्द्विविधं परोक्षमपरोक्षञ्चेति, प्रकारान्तरे संशयधारावाहिककार्याहार्यस्मृतिभेदात्पञ्चविधम् । शालग्रामे विधिना विष्णुत्वधीः कार्यं ज्ञानं शेषं तत्तच्छ०[३५–६९पृ०]द्रष्टव्यम्। ज्ञायतेऽनेनेति करणव्युत्पत्त्या वृत्तिर्ज्ञानम्, ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या संविज्ज्ञानम्८४५

ज्ञानदण्डत्वम्–अज्ञानतत्कार्यदमनहेतुत्वम्।

ज्ञाननिवर्त्यत्वम्–ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वम् ॥ ८४७ ॥

ज्ञानफलम्—वर्तमानलिङ्गदेहनिवृत्तिः १ भाविजन्मानारम्भो वा २ अविद्यानिवृत्ति-रिति मतान्तरे ॥ ८८० ॥

ज्ञानलक्षणसन्निकर्षः—स्वविषयविषयक-प्रत्यक्षजनको ज्ञानविशेषः ॥ ८८१ ॥

ज्ञानात्मा—ज्ञातृत्वोपाध्यहङ्कारावच्छिन्नं चै-तन्यम् ॥ ८८२ ॥

ज्ञानाध्यासः—अतस्मिँस्तद्बुद्धिः, यथा शु-क्तौ रजतबुद्धिर्यथावाऽऽत्मन्यनात्मबुद्धिः ।

ज्ञानेन्द्रियम्—ज्ञानकरणमिन्द्रियम् १ अ-पञ्चीकृतपञ्चमहाभूतकार्यत्वे सति शब्दा-द्युपलब्धिसाधनमिति वे० २ सात्त्विकाह-ङ्कारकार्यत्वे सति रूपादिविषयालोचनक-रणम् । रूपाद्यालोचनकरणत्वमालोकेऽति-प्रसक्तं तद्वारणाय सात्त्विकाहङ्कारका-

र्थत्वे सतीति सां० ॥ ८५७ ॥

ज्योतिषम्-सूर्यादिगत्यादिकप्रतिपादको ग्रन्थः १ वेदाङ्गत्वे सति सूर्यादिग्रहगत्यादिकालज्ञानसाधनमिति बृहदभिधाने ८५८

ट

टिप्पणी-मूलटीकान्यतरव्याख्यारूपा ८५९

टीका-विषमपदव्याख्यारूपा ॥ ८६० ॥

त

तटस्थः-वादिप्रतिवादिभावाऽनापन्नः ८६१

तटस्थत्वम्-तद्भिन्नत्वे सति तद्बोधकत्वम् १ कादाचित्कत्वे सति व्यावर्तकत्वं वा, यथा देवदत्तस्य तिलकादिकम् ॥ ८६२ ॥

तटस्थलक्षणत्वम्-यावल्लक्ष्यकालमनवस्थितत्वे सति व्यावर्तकत्वम् । स्वरूपलक्षणे-

ऽतिव्याप्तिवारणाय सत्यन्तम्, लक्ष्यावृत्ति-
तादृशधर्मेऽतिव्याप्तिवारणाय व्यावर्तक-
त्वमिति ॥ ८६४ ॥

तत्त्वज्ञानम्—इदं सर्वं द्वैतजातमद्वितीये चि-
दानन्दात्मनि मायया कल्पितत्वान्मृषैव
आत्मैवैकः परमार्थसत्यः सच्चिदानन्दाद्व-
योऽहमस्मीति ज्ञानम् १. तत्त्वं पदार्थयोर-
भेदगोचरान्तःकरणवृत्तिरिति म० ॥ ८६६ ॥

तत्त्वंपदार्थशोधनम्—यद्व्यावृत्तं तत्तद-
नात्मा यदन्वायि तदात्मेति निश्चयः ॥ ८६७ ॥

तनुमानसाभूमिका—निदिध्यासनाभ्यासे
न मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यता

तनुव्यसनम्—शरीरपुष्ट्याद्यर्थं रसायनभ-
क्षणादीच्छाहेतुर्व्यसनम् ॥ ८६९ ॥

तन्त्रत्वम्—सकृदुच्चारितत्वे सत्यनेकार्थबो-

धकत्वम् ॥ ८७० ॥

तपः—शास्त्रीयमार्गेण कायेन्द्रियशोषणम् १ मनसश्चेन्द्रियाणाञ्चैकाग्र्यं वा २ अन्तर्मुखानि यदि खानि तप(सा)स्ततः किं, नान्तर्मुखानि यदि खानि तप(सा)स्ततः किम् । अन्तर्बहिर्यदि हरिश्च तपसा ततः किं, नान्तर्बहिर्यदिहरिश्च तपसा ततः किम् ॥८७२॥

तमः—स्पर्शरहितत्वे सति रूपवत् १ गुरुत्वे सति आवरकत्वे सति मोहकत्वम् ॥८७४॥

तर्कः—अनिष्ट ( ष्टापादनम्) प्रसञ्जकः १ व्याप्यारोपेण व्यापकारोपो वा, यथा यदि पर्वते वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात् ॥

तात्पर्यम्—वक्तुरिच्छा १ स्वार्थसंसर्गानुभवजननस्वरूपयोग्यत्वं तात्पर्यत्वम् २ तत्प्रतीतिजननयोग्यत्वे सति तदितरप्रतीतीच्छ-

थानुच्चरितत्वं वा २ तच्च वक्तृतात्पर्यशब्द-
तात्पर्यभेदेन द्विविधं ल० तत्तच्छ० द्रष्टव्यम् ॥

तात्पर्यानुपपत्तिः—मुख्यार्थप्रत्यायने स-
ति तात्पर्यस्यानुपपन्नत्वम् ॥ ८८० ॥

तादात्म्यम्—भेदसहिष्णुरभेदस्तमिति के-
चित् १तद्भिन्नत्वे सति तदभिन्नसत्ताकत्वम्

तापः—प्रतिकूलवेदनीयः,स आध्यात्मिका-
धिभौतिकाधिदैविकभेदात्त्रिविधः ल० त-
त्तच्छब्दे [ ६३ पृ. ] द्र० ॥ ८८३ ॥

तामिस्रः (=द्वेषः) दुःखसाधने विद्यमा-
नेऽपि दुःखं मे माभूदिति विपर्ययविशेषः

तितिक्षा—शीतोष्णादिद्वन्द्वसहिष्णुता८८६

तीव्रवैराग्यम्—अस्मिन् जन्मनि पुत्रदा-
रादिर्मास्त्विति स्थिरबुद्ध्या विषयजिहासा

तीव्रतरवैराग्यम्-पुनरावृत्तिसहितं ब्रह्म-

लोकादिपर्यन्तं मास्त्विति । स्थिरबुद्ध्या विषयजिहासेति कैलासपर्वतः ॥ ८८७ ॥

तुरीयाऽवस्था } ब्रह्मध्यानावस्थस्य पुनः
तुर्यावस्था }
पदार्थान्तराऽपरिस्फूर्तिः ॥ ८८८ ॥

तुल्यत्वम्–स्वभिन्नजातिसमनियतत्वम् ८८९

तुल्यबलविरोधः–अन्यत्रान्यत्रलब्धावकाशयोरेकत्र युगपत्प्राप्तिः ॥ ८९० ॥

तुष्टिः–भोग्येष्वेतावताऽलमिति बुद्धिः १ अधिगतार्थादन्यत्र तुच्छत्वबुद्धिर्वा ॥ ८९१ ॥

तूलाऽविद्या } उपाध्यवच्छिन्नचैतन्याच्छा-
कार्याविद्या }
दिकाऽविद्या १ सा चतुर्विधा अनित्ये ब्रह्मलोकादिफले नित्यत्वबुद्धिरेका, अशुचौ पुत्रभार्यादिशरीरे शुचित्वबुद्धिर्द्वितीया, दुःखे तत्साधने च स्रक्चन्दनवनितादौ

सुखतत्साधनबुद्धिस्तृतीया, गौणमिथ्यात्मनि पुत्रभार्यादावन्नमयादिकेऽनात्मनि मुख्यात्मत्वभ्रान्तिश्चतुर्थी ॥ ८९३ ॥

तृष्णा—प्राप्यमाणेष्वप्यर्थेष्वतृप्तिः १ यावदीप्सितद्रव्यप्राप्तौ सत्यामपि पुनस्ततोऽधिकद्रव्याकाङ्क्षा वा ॥ ८९५ ॥

तेजः—उष्णस्पर्शवत् १ चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतं सामान्यं वा * २ * स्त्रीबालकादिभिर्मूढैरनभिभाव्यम् ॥ ८९८ ॥

तैजसो जीवः—व्यष्टिसूक्ष्मकारणशरीरद्वयोपहितं चैतन्यम् ॥ ९९९ ॥

त्यागः—स्वत्वध्वंसानुकूलव्यापारः ।९००॥

त्रसरेणु—परमाणुषट्कात्मकत्वे सति द्व्यणुकत्रयात्मकरजः ॥ ९०१ ॥

त्रिपुटी—त्रयाणां पुटानां ज्ञानप्रकाराणां

समाहारः ॥ १०२ ॥

त्रिवृत्करणम्—त्रीणि भूतानि द्विधा विदार्य प्रतिभूतमेकैकमर्द्धं द्विधा प्रस्फोट्येतरभूतद्वये योजनम् ॥ १०३ ॥

त्रुटी—अवयवादिहीनता ॥ १०४ ॥

त्वक्—स्पर्शोपलब्धिसाधनमिन्द्रियम् १०५

## द

दमः—बाह्येन्द्रियनिग्रहः १ नित्यनैमित्तिककर्मातिरिक्तानां व्यापाराणां बाह्येन्द्रियनिग्रह इति गूढार्थतत्त्वालोके २ अन्ये ब्रह्मज्ञानोपयोगिव्यापारातिरिक्तबाह्येन्द्रियव्यापारमात्रनिरोधः ॥ १०८ ॥

दम्भः—वेषभाषाक्रियाचातुर्यादिभिः स्वमहत्त्वप्रकटनम् १ परेषामग्रे स्वधर्मजपध्यानादीनां पूजाख्यातिलाभार्थं प्रकटीकरणं

वा २ अधार्मिकत्वे सति धार्मिकत्वख्यापनेच्छा वा ॥ ९११ ॥

दया—दुःखिनं प्रत्यनुजिघृक्षा १ दुःखितेषु भूतेषु (अनुकम्पा) कृपा वा ॥ ९१३ ॥

दर्पः—भर्त्सनादिषु दृढबुद्धिः १ धनस्वजनविद्यादिनिमित्तश्चित्तस्योत्सेको वा ९१५

दर्शनम्—विचारप्रयोजकं ज्ञानम् १ यथार्थतया ज्ञायते पदार्थोऽनेनेति ॥ ९१६ ॥

दानम्—स्वस्वत्वत्यागानुकूलव्यापारः १ गोहिरण्यादीनां स्वकीयानां मूल्यग्रहणं विना शास्त्रोक्तवर्त्मना स्वस्वत्वपरित्यागपरस्वत्वापादनत्यागत्वमिति दिनकर्याम् ॥९१८॥

दार्ष्टान्तिकम्—दृष्टान्तयुक्तम् ॥ ९१९ ॥

दिक्—अकालत्वे सत्यविशेषगुणा महती १ प्राच्यादिव्यवहारासाधारणहेतुः । आ-

काशादिवारणायासाधारणेति ग्रं. १२१.

दिनम्—सूर्यकिरणावच्छिन्नकालः ॥१२२॥

दीक्षा—गुरुमुखात् स्वेष्टदेवमन्त्रग्रहणम् १२३

दुःखम्—सर्वेषां प्रतिकूलतया वेदनीयम् १ इतरद्वेषानधीनद्वेषविषयो वा । सर्पादावति-व्याप्तिवारणायेतरद्वेषानधीनेति द्वेषवि-शेषणम् २ द्विष्टसाधनताविषयकजन्यज्ञाना-जन्यद्वेषविषयगुण इति न्या० ॥ १२६ ॥

दूषणम्—दोषजनकम् ॥ १२७ ॥

दूषितम्—दूषणयुक्तम् ॥ १२८ ॥

दृश्यत्वम्—भानभास्यत्वम् १ चिद्विषयत्वं वा २ फलविषयत्वं वा ३ वृत्तिप्रतिफलि-तचिद्विषयत्वं वेति पु० ४सत्तादात्म्यप्रकार-कप्रमाविषयत्वम् ५ स्वसमसत्ताकज्ञानवि-षयत्वं वेति ग्रं० ॥ १२४ ॥

**दृष्टकूटत्वम्**–अन्यार्थत्वे सत्यन्यार्थबोधकत्वम्, यथा पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः, भ्रमश्च वायुवेगेन पदमेकं न गच्छति 'कुलालचक्रम्'। पञ्चभर्त्री न पाञ्चाली द्विजिह्वा न च सर्पिणी, श्यामास्या न च मार्जारी यो जानाति स पण्डितः 'लेखनी' ॥ ९३५ ॥

**दृष्टान्तः**–वादिप्रतिवादिभ्यां (निर्णीतो) संमतोऽर्थः, यथा महानसमिति १ वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरानिश्चयविषयो वा २ लौकिकपरीक्षकाणां यत्रार्थे बुद्धिसाम्यं सः ३ निश्चितसाध्यकत्वं दृष्टान्तत्वम्।

**दृष्टार्थापत्तिः**–अनुपपद्यमानदृष्टार्थज्ञानात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा दि-

वाऽभोजि देवदत्ते रात्रिभोजनमन्तरानुपप-
द्यमानपीनत्वदर्शनात्तदुपपादकीभूतस्यार्था-
न्तरस्य(=रात्रिभोजनस्य) कल्पनम् १.शु-
क्तिरजतादिनिष्ठनिषिध्यमानत्वादिरूपार्था
भावव्यापकामिथ्यात्वाद्यभावप्रतियोग्यर्थ
विषयकज्ञानत्वं दृष्टार्थापत्तित्वम् ॥१४१॥
दृष्टिः—चक्षुर्द्वारा रूपोपलब्धिहेतुर्मनोवृत्तिः१
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत्,
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी
दृष्टिसृष्टिः—दृष्टिसमसमया विश्वसृष्टिः १
दृष्टिसमानकालीनसृष्टिर्वा २ दृष्टिरेव विश्व-
सृष्टिर्वा ३ त्रिविधसत्ताबहिर्भूतत्वे स-
त्यसद्विलक्षणत्वं दृष्टिसृष्टित्वमित्यद्वैतसि-
द्धौ ॥ १४६ ॥

---

१ दृष्टिः दर्शनं स्वप्रकाशज्ञानस्वरूपमित्यर्थः ।

देवताधिकरणम्—यज्ञादावधिकारित्वत-
दभावयोरन्यतरसाधको न्यायः ॥९४७॥

देवयानमार्गः—अर्चिराद्यभिमानिदेवाधि-
ष्ठितो मार्गः १ नागवीथ्युत्तरे यच्च सप्त-
र्षिज्यश्च दक्षिणम्, उत्तरः सवितुः पन्था
देवयानस्तु स स्मृतः २ देवः परेशो या-
यतेऽनेन मार्गेण ॥ ९४९ ॥

देशपरिच्छेदः—यत्किञ्चिद्देशावृत्तित्वम् १
अत्यन्ताभावप्रतियोगित्वं वा २ अधिक-
देशवर्त्तित्वे सति सर्वाव्यापित्वम्, यथा
संयोगादिरिति ग्रं० ॥ ९५२ ॥

देशान्तरम्—महानद्यन्तरं यत्र गिरिर्वा व्य-
वधायकः, वाचो यत्र विभिद्यन्ते तद्देशा
न्तरमुच्यते ॥ ९५३ ॥

देहः—प्रतिक्षणमुपचीयमानावयवः १ इन्द्रि-

याश्रयो वा ॥ ९८५ ॥

देहवासना–देहानुभवजनितत्वे सति देहस्यैव पुनः पुनः ( पुष्ट्याद्यर्थम् ) स्मरणहेतुः। सा त्रिविधा–आत्मत्वभ्रान्तिर्गुणाधानत्वभ्रान्तिर्दोषापनयनत्वभ्रान्तिश्चेति। गुणाधानं दोषापनयनञ्च द्विविधं लौकिकं शास्त्रीयञ्चेति। अप्रामाणिकत्वादशक्यत्वात्पुरुषार्थानुपयोगित्वात्पुनर्जन्महेतुत्वाच्च समस्तदेहवासना मलिना ॥ ९८६ ॥

देहाध्यासः–देहस्य तद्धर्मस्य वाऽऽत्मतया तद्धर्मतया वाऽध्यासः ॥ ९८७ ॥

दोषत्वम्–कार्यविरोधित्वम्. *१* तावदन्यतमत्वम् २ भ्रमत्वावच्छिन्नप्रतिजनकतावच्छेदिका याऽविद्यात्वजातिस्तद्रत्त्वं वा।

द्रवत्वम्–आद्यस्यन्दनासमवायिकारणम्।

द्रव्यत्वम्—लिङ्गसंख्याकारकान्वितत्त्रमि- ति वैया० १ गुणक्रियाश्रयत्वम् २ गग- नारविन्दसमवेतत्वे सति नित्यगन्धासमवे- तत्वं वेति मी० ३ गुणाश्रयत्वम् ४ गुण- वत्त्वं वा ५ समवायिकारणत्वं वा ६ सा- क्षात्सम्बन्धेनेन्द्रियग्राह्यत्वं वा ७ कार्या- श्रयत्वमिति वादीन्द्रः ८ गुणसमानाधि- करणसत्ताभिन्नजातिमत्त्वम् ९ गुणकर्मभि- न्नत्वे सति सामान्यवत्त्वं वा १० संयोग- वद्वृत्तिसत्तावान्तरजातियोगित्वम् । गुणा- दावतिव्याप्तिपरिहाराय संयोगवद्वृत्ती- ति विशेषणम्, सत्तामादाय गुणादावति- व्याप्तिपरिहाराय सत्तावान्तरग्रहणमि- ति वि० मिश्रः ॥ ९७१ ॥

द्वारत्वम्—तज्जन्यत्वे सति तज्जन्यजनकत्वम्।

द्वेषः—लोकानामुद्वेगाचरणम् १ दुःखतत्सा-
धनयोः क्रोधो वा २ द्विष्टसाधनताज्ञान-
जन्यगुण इति ग्रं० ३ द्वेषोऽननुभवविष-
यवृत्तिगुणत्वव्याप्यजातिमानिति नै० ॥

द्व्यणुकम्—परमाणुद्वयारब्धकार्यम् ॥

ध

धनुर्वेदः—धनुः प्रयोगसंहारज्ञापकत्वे सति
यजुर्वेदस्योपवेदः ॥ १७८ ॥

धर्मत्वम्—अन्याश्रितत्वे सति स्वतन्त्रताशू-
न्यत्वम् *१* वेदविहितत्वम् २ अलौ-
किकश्रेयःसाधनत्वेन विहितक्रियात्वं वे-
ति ललामेन गागाभट्टेन ३ बलवदनि-
ष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वे-

---

१ बौद्धकापालिकाऽऽर्हतलौकायतशाक्ता
दिभ्यो विमुखत्वम् ।

दप्रापितत्वम् । श्येन, स्वर्ग, भोजन, व्यावृत्त्यर्थं विशेषणत्रयमिति वीरमित्रोदये मित्रमिश्रः ४ कार्यनियोगापूर्वपर्यायकैः शब्दैरुच्यमानो धात्वर्थसाध्यस्वर्गादिफलसाधनपुरुषगुणत्वमिति प्राभाकराः ५ वेदप्रतिपाद्यत्वे सति प्रयोजनवदर्थत्वम् । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति, भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्यत्वे सतीति, अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणायार्थत्वमिति मी० ६ यागजन्यस्वर्गजनकवृत्तिगुणत्वव्याप्यजातिमत्त्वमिति तार्किकमते

धर्मित्वम्–प्रतियोगिभिन्नत्वे सति भेदनिरूपकत्वम् ॥ १८५ ॥

धातुत्वम्–क्रियावाचित्वे सति गणपाठि-

तत्वम् ॥ १८६ ॥

धारणा—सारासारावधारणपूर्वकं प्रत्युक्ति समये स्मरणयोग्यतापादनम् १ मूलाधार—स्वाधिष्ठान—मणिपूरका—ऽनाहत—विशुद्धा—ऽऽज्ञाचक्रदेशानामन्यतरस्मिन्प्रत्यगात्मनि वा चित्तस्थापनमित्यादर्शो॥१८८॥

धारावाहिकज्ञानम्—घटो घट इत्याकारकः सततप्रत्ययः ॥ १८९ ॥

धृतिः—अवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः ॥ १९० ॥

ध्यानम्—अन्तराऽन्तरा वृत्त्यन्तरवती प्रत्ययैकतानता (सजातीयप्रत्ययप्रवाहः). १ विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणम् ग्रं० ॥ १९२ ॥

ध्वंसत्वम्—जन्याभावत्वम् ॥ १९३ ॥

ध्रुवत्वम्—प्रकृतधात्वर्थव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् ॥ ९९४ ॥

न

नगरम्-पण्यक्रियादिनिपुणत्वे सत्यनेकजातिसम्बद्धत्वम् ॥ ९९५ ॥

ननु-प्रत्युक्तौ आक्षेपः ॥ ९९६ ॥

नमः-स्वापकर्षबोधानुकूलव्यापारः ॥९९७॥

नमस्कारः-करशिरःसंयोगादौ व्यापारः॥

नमस्कारमङ्गलम्- स्वनिष्ठापकर्षविषयकबोधानुकूलः स्वीयव्यापारः ॥ ९९९ ॥

नरकः-पापिलोकपापभोगस्थानम् । नास्त्यस्मिन् रमणं रतिकरं स्थानमल्पमस्तीति।

नाटकम्-गद्यपद्यप्राकृतभाषादिमयग्रन्थविशेषः ॥ १००१ ॥

नादः-संवृत्ते गलविवरे यत्कण्ठनिनादनक-

रणम् ॥ १००२ ॥

नान्तरीयकत्वम्—अन्यनिष्पादकयत्ननिष्पाद्यत्वम् ॥ १००३ ॥

नाम—शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते, तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥

नाममात्रम्—स्ववीर्यहीनत्वे सति संज्ञाधारिमात्रत्वम् ॥ १००५ ॥

नास्तिकः—परलोकाद्यभावप्रतिपादकः १. वेदनिन्दको वा ॥ १००७ ॥

निगमः—अन्ननिपर्यायकथनेन वेदार्थबोधकः

निगमनम्—हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनम्, यथा तस्मात् (=धूमात्) तथा(=वह्निमान्) इति ॥ १००९ ॥

निग्रहः—अनुग्रहाभावः *१* इन्द्रियाणां विषयेभ्यो निग्रहणम् ॥ १०११ ॥

निग्रहस्थानम्—पराजयहेतुः १ वादिनोऽपजयहेतुर्वा २ उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं निग्रहस्थानत्वम् २ वादिप्रतिवादिनोऽसामर्थ्यबोधकत्वं वेति सूत्रवृत्तौ ॥ १०१६ ॥

निघण्टुः—पर्यायनाम्नामेकत्रार्थकथनाय संग्रहः १ वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मक इति प्रस्थानभेदे ॥ १०१७ ॥

नित्यत्वम्—सर्वकालवृत्तित्वम् १ अविच्छिन्नपरम्पराकत्वमिति मता० २ ध्वंसाप्रतियोगिवृत्तित्वविशिष्टसत्तायोगित्वमितिगौ० ब्र० ३ ध्वं ( भावत्वे ) सभिन्नत्वे सति-ध्वंसाप्रतियोगित्वम् । ध्वंसेऽतिव्याप्तिवारणाय ध्वंसभिन्नेति विशेषणम्, घटादावतिव्याप्तिवारणायविशेष्यदलम् ४ ध्वं-

समागभावान्यतरामतियोगित्वमित्यपरे ॥
नित्यकर्म—अवश्यापेक्षितफलसाधनम् १
अकरणे प्रत्यवाया(यजनकम् २)नुबन्धित्वं नित्यकर्मत्वम्, यथा ब्राह्मणस्य सन्ध्या-गायत्र्यादि ३ प्रत्यवायजनकीभूताऽभावप्रतियोगित्वम्, यथा एकादश्यामुपोषणमिति पु० ४ अहरहर्जायमानत्वम्, यथा नित्यं कुमाराः क्रीडन्तीति ग्रं० ॥१०२७॥
निदिध्यासनम्—अपरोक्षनिश्चयत्वसम्पादकस्तर्कः *१* विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणमित्यद्वैतमते २ श्रुतार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानमिति नैयायिकाः ॥ १०३० ॥
निद्रा—अभावप्रत्ययालम्बना वृत्तिः १ प्रबुद्धप्रत्यवमर्शहेतुत्वम् ॥ १०३२ ॥

निन्दा-अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं वचनम् *१.* विरोधिभिः पुरुषैः स्वास्मिन्नापादिता दोषोक्तिः २ आस्येन परस्य विद्यमानाविद्यमानदोषसङ्कीर्तनं वा१.०३५

निन्दितम्-शास्त्रलोकयोर्गर्हितम् ॥१०३६॥

निमन्त्रणम्-आवश्यकश्राद्धभोजनादौ प्रवर्त्तनम् ॥ १०३७ ॥

निमित्तकारणम्-स्वातिरिक्तकार्यजनकम् १ कार्योत्पत्तिमात्रकारणम्, यथा घटादेः कुलालादिः २ कार्यानुकूलव्यापारवत्कारणमिति ग्रं०॥ १०४० ॥

नियमः-शौचादिसम्पादनम् १ आगन्तुकसाधनकर्मरूपाङ्गीकारो वा २ शौचाद्यन्यतमत्वं नियमत्वम् ३ कायवाक्साध्यत्वे सति योगाङ्गविशेषत्वमिति ग्रं० ४ जन्महेतुः का-

न्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे निय-
मयति प्रेरयतीति। नियमफलानि सकामानां
योगशास्त्रे कथितानि। तथाहि—शौचात्स्वा-
ङ्गजुगुप्सापरैरसंसर्गः, सन्तोषादनुत्तमसुख-
लाभः, स्वाध्यायादिष्टदेवतासंप्रयोगः॥

नियमविधिः—पक्षे प्राप्तस्याऽप्राप्तांशपूरको
विधिः, यथा यागाङ्गत्वेन प्राप्तानां व्रीही-
णां नखविदलनमुसलावहननयोर्द्वयोः पक्ष-
योः कदाचिन्नखविदलनस्य प्राप्तौ सत्यां
मुसलावहननमप्राप्तं स्यात्तस्य पूरको व्री-
हीनवहन्यादित्यवघातविधिः। अपूर्वविधावतिव्याप्तिवारणाय पक्षप्राप्तेति १ नानासाधनसाध्यक्रियायामेकसाधनप्राप्ताव-
प्राप्तस्यापरसाधनस्य प्रापको विधिरिति
सि० लेशे२पक्षेऽप्राप्तस्य प्रापकत्वमिति नै०॥

निराकाङ्क्षा—शाब्दबोधोपयोग्यपेक्षाशून्यता

निरुक्तम्—पदानामवयवार्थनिर्वचनप्रतिपादकम् १. वैदिकपदानां पर्यायव्युत्पत्त्यादिप्रतिपादकं शास्त्रमित्यादर्शे *२* शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः, यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे शक्तिरिति विवरणे १०५१.

निरुपाधिकभेदत्वम्—उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाववत्त्वम् ॥१०५२॥

निरूपाधिकाध्यासः } उपाधिनिरूपणानधीननिरूपणम् ॥ १०५३ ॥
निरूपाधिकभ्रमः }

निरूढलक्षणा—अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणा ॥१०५४॥

निरूपणम्—लक्षणप्रमाणस्वरूपाभिधानम्

सर्वतन्त्रसिद्धान्तपदार्थल० सं० (निर्वि, १४७

१ तत्त्वज्ञानानुकूलशब्दप्रयोगो वा १०५६

निरूपणीयनिष्ठसङ्गतिः—अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसंबन्धः ॥ १०५७ ॥

निरोधः—इन्द्रियाणां विषयेभ्यो निग्रहणम् ।

निर्णयः—अनुभूतार्थकथनम् *१* यथार्थार्थानुभवपर्यायप्रमितिरिति सर्वद० सं० २ निश्चयग्राहिणि तदभावाग्राहिणि ज्ञानमिति बृहदभिधाने ॥ १०६१ ॥

निर्देशः—निर्दिश्यतेऽभिधीयतेऽनेनेति ॥

निर्वाहकत्वम्—तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यत्वम् ॥ १०६३ ॥

निर्विकल्पकम्—संसर्गानवगाहिज्ञानम्, यथा सोऽयं देवदत्तः १ निर्गतो विकल्पो विशेष्यविशेषणतासंबन्धो यस्मात् स १०६४

निर्विकल्पसमाधिः
असम्प्रज्ञातसमाधिः } ज्ञातृज्ञानज्ञेयत्रिकल्पानवभासपुरःसरमात्मनि चित्तसमाधानमपरनाम निर्बीजः ॥ १०६५ ॥

निवृत्तिः-प्रवृत्त्युपाधिविनाशको यत्नः१०६६

निश्चयः-संशयविरोधिज्ञानम् १ त(द)द्भावाप्रकारत्वे सति तत्प्रकारकज्ञानत्वम् १६८०

निषिद्धकर्म-प्रत्यवायजनकं कर्म, यथा गोहत्यादि ॥ १०६९ ॥

निषेधः-पुरुषानिवर्त्तकं वाक्यम् १ अनिष्टसाधनताबोधकवेदादिवाक्यं वा १०७१

निष्कर्षः-सारांशः १ निष्कृष्टत्वं निष्कर्षत्वम्

निष्कामकर्मत्वम्-कर्तृत्वाभिमानफलेच्छाभावत्वे सत्यन्तर्यामीश्वरचरणैकसमर्पितत्व-

---

१ निर्गतं क्लेशकर्मादिबीजं यत्रेति व्युत्पत्तेः ।

म् १ निर्गतः कामोऽभिलाषो यस्य यत्र वा

निष्परिग्रहः—कन्थापादुकाद्यतिरिक्तद्रव्या-
नङ्गीकारः ॥ १०७५ ॥

निःस्वरूपत्वम्—अप्रतियोग्यभावाधिकत्वे स-
ति स्वरूपेण निषेधप्रतियोगित्वम् १०७६

नीतिः—राजविद्यानियन्तृशास्त्रम् ॥१०७७॥

नैमित्तिककर्म—कुतश्चिन्निमित्तात्कृतं कर्म,
यथा पुत्रेष्ट्यादि ॥ १०७८ ॥

नैमित्तिकप्रलयः
अवान्तरप्रलयः
मन्वन्तरप्रलयः } सर्वकार्यद्रव्यध्वंसः १
एकस्मिन्मन्वादावपगते-
ऽपराधिपत्यान्तरालकाल इत्यादर्शे २ का-
र्यब्रह्मणो दिवसावसाननिमित्तकत्रैलोक्य-
मात्रप्रलय इति धर्मराजः ॥ १०८१ ॥

नैवेद्यम्—देवतोद्देशेन सक्तद्रव्यम् ॥१०८२॥

नैष्ठिको ब्रह्मचारी—यावज्जीवं गृहीतब्रह्मचर्यव्रतः ॥ १०८३ ॥

नोदनाख्यसंयोगः—स्पर्शवद्द्रव्यसंयोगः।

न्यायः—लोकशास्त्रप्रसिद्धदृष्टान्तः *१* प्रमाणानुग्राहकस्तर्कः २प्रमाणैरर्थपरीक्षणं वा *२* उचितानुपूर्विकप्रतिज्ञादिपञ्चकसमुदाय इति शिरोमणिः ४ अ(तृतीयाष्ठिङ्ग) नुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यमिति चिन्तामणौ

न्यायशास्त्रम्—पदार्थानां सर्वेषामनुगमरूपेण प्रकाशको ग्रन्थः ॥ १०९० ॥

न्यूननिग्रहस्थानम्—यत्किञ्चिदवयवशून्यावयवाभिधानम् ॥ १०९१ ॥

न्यूनवृत्तित्वम्—तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम् ॥ १०९२ ॥

## प

पक्षः-शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथ्यात्मकः *१* वादिप्रतिवादिभ्यां दर्शितविप्रतिपत्तौ कोटिः *२* सन्दिग्धसाध्यवान् ३ अनुमित्युद्देश्यमिति नवीनमते ॥ १०९६ ॥

पक्षपातः-पक्षेऽन्यायसहाये पातः अभिनिवेशः ॥ १०९७ ॥

पङ्क्तिः-ग्रन्थार्थबोधकशब्दः *१* सजातीय पदार्थानां स्थितिः ॥ १०९९ ॥

पञ्चीकरणम्-स्वस्वेतरभूतचतुष्टयभागविशेषेण मिश्रीकरणम्, यथा पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्द्धभागं विहायार्द्धभागं चतुर्धा विभज्येतरेषु योजिते १ यद्वा,भूतानि प्रत्येकं पञ्चधा विभज्य स-

द्भूतांशे पञ्चसमुदायकरणम्॥ ११०१ ॥
पटत्वम्—स्वाश्रयपटभिन्नाधिकरणावृत्ति-
र्जातिः ॥ ११०२ ॥
पण्डितः—पण्डा शास्त्रतात्पर्यवती बुद्धिः
संजाता यस्य सः ॥ ११०३ ॥
पतितः—नरकगमनसूचककर्मविशेषकारकः
पतित्वम्—निरतिशयज्ञानक्रियाशक्तिमत्त्व-
मिति शैवमते ॥ ११०५ ॥
पतिव्रता—आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते म-
लिना कृशा, मृते म्रियेत या पत्यौ सा-
ध्वी ज्ञेया पतिव्रता ॥ ११०६ ॥
पत्रत्वम्—लेखनाधारत्वम् ॥ ११०७८ ॥
पदम्—सुप्तिङन्तम् १ विभक्त्यन्तशब्दो वा
*२* वर्णस(मुदायः)मूहः ३ अर्थवद्व-
र्णो वा ४ वाक्यैकदेशो वा ५ वृत्तिमत्त्व-

मिति ग्रं० ६ प्रत्येकं संभूयश्च वाक्यांशबोधको वर्ण इति पञ्चीकरणटीकायां रामतीर्थः ७ अर्थस्वरूपमात्रबोधको वर्णसन्दर्भ इति संक्षेपशा० टी० रामतीर्थः ८ शाब्दप्रतीति जन्यशाब्दप्रतीतिजनकं वर्णात्मकम्। शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं वाक्यं प्रथमविशेषणेन व्यावर्त्यते, द्वितीयेन प्रत्यक्षानुमानादावतिव्याप्तिर्व्युदस्यते, वर्णात्मत्वविशेषणादृष्टस्वरादेरिति चित्सुखपाम् ९ तच्चतुर्विधं यौगिकरूढयोगरूढयौगिकरूढभेदेन चतुर्विधं ल०तत्तच्छ० द०॥ पदार्थः—पदनिष्ठवृत्तिविषयः १ पदजन्यज्ञा-

---

१ शब्दजनिता या प्रतीतिस्तयाऽजन्यत्वे सति शाब्दप्रतीतिजनकं वर्णात्मकं च यत्तत्पदमित्यर्थः ।

नविषयत्वं पदार्थत्वम् *२* द्रव्याद्यन्यतमत्वम् ३ ज्ञेयत्वं प्रमेयत्वमभिधेयत्वमस्तित्वं पदार्थसामान्यलक्षणम् ॥ ११२० ॥

पदार्थाऽभावनी—असंसक्तिभूमिकाभ्यासपाटवाच्चिरं प्रपञ्चाऽपरिस्फूर्त्यवस्था, गाढसुषुप्तिरिति चोच्यते । अस्यामवस्थायां परप्रयत्नेन योगी व्युत्तिष्ठते ॥ ११२१ ॥

पदैक्यवाक्यत्वम्—पदस्य वाक्येन सहैकवाक्यतै(तयै)कार्थबोधकत्वम् १ पदरूपार्थवादवाक्यस्य विधिवाक्येन सह यदेकवाक्यत्वमिति ग्रं० ॥ ११२३ ॥

परकृतिरर्थवादः—पुरुषविशेषनिष्ठमिथोविरुद्धकथनम् ॥ ११२४ ॥

परतउत्पत्तिकत्वम्<br>उत्पत्तिपरतस्त्वम् } ज्ञानमात्रजनकसाम-

न्यतिरिक्तकारणप्रयोज्यत्वम् १ आगन्तु
कमात्रकारण(णापेक्षज्ञानसामग्रीजन्यत्वम्
२)सहकृतज्ञानप्रयोजकप्रयोज्यत्वमिति पु०

परतोग्राह्यत्वम्
ज्ञप्तिपरतस्त्वम् } स्वाश्रयग्राहकातिरिक्त-
सामग्रीग्राह्यत्वमिति वेदा० १ ज्ञानमात्रग्राह-
कसामग्रीभिन्नसामग्रीग्राह्यत्वम् ॥११२९॥

परतः प्रमाणत्वम्—आम्नायरूपमूलप्रमा-
णसापेक्षप्रमाणत्वम्, यथा स्मृत्यादिवाक्यम्

परत्वम्—अधिकदेशवृत्तित्वम् *१* पर-
व्यवहारासाधारणकारणत्वम् ॥११३२॥

परदेशः—स्वाधिष्ठितदेशाद्भिन्नदेशः ११३३

परप्रकाशत्वम्—वेद्यत्वे सत्यपरोक्षव्यव-
हारयोग्यत्वम् ॥ ११३४ ॥

परममहत्त्वम्—अपकर्षानाश्रयपरिमाणत्वम्

**परमहंसः**—एकदण्डधरो मुण्डोऽयज्ञोपवीती त्यक्तसर्वकर्मात्मनिष्ठः स। परमः हंस आत्मा यस्यास विविदिषा विद्वद्भेदेन द्विविधः ल.द्र.

**परमाणुः**—मूर्तत्वे सति निरवयवः १ मनोभिन्नत्वे सति परमाणुत्वपरिमाणवानिति न्यायम० २ जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः, तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥११३९॥

**परम्परासम्बन्धः**—स्वसंबन्धिनः संबन्धः।

**परम्परासाधनत्वम्**—अव्यवहितपूर्वत्वसंम्बन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मावच्छिन्नजनकत्वे सति कार्यनियतपूर्ववर्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वमिति मथुरानाथः ॥११४१॥

परलोकः } स्थूलशरीराभिमानपरित्यागः
लोकान्तरम् }

१ पारलौकिकास्थितिस्थानमिति बृह० ॥

परवैराग्यम्—ब्रह्मज्ञानसाधारणविषयेषु ( त्रिगुणत्वादिदोषदर्शनात् ) वैतृष्ण्यमित्यादर्शे ॥ ११४४ ॥

परामर्शः—व्याप्तिवि (शिष्टप) षयकपक्षधर्मताज्ञानम् ॥ ११४५ ॥

परार्थानुमानम्—न्यायमयोऽनुमानम् ॥

परार्थानुमितिः—स्वयं व्याप्यव्यापकं प्रतीत्य परप्रतिपत्त्यर्थं प्रयुक्तात्प(पञ्चा) वयववाक्यात्परस्य व्यापकप्रत्ययः॥ ११४७॥

परार्द्धम्—स्थानात्स्थानं दशगुणमेकैकं गुण्यते द्विजाः, ततो ह्यष्टादशे भागे परार्द्धमभिधीयते ॥ ११४८ ॥

परावाक्-मूलाधारचक्रस्थवायुमात्राभिव्यङ्ग्यो-
तिसूक्ष्मात्माऽस्मदादिरप्रत्यक्षः शब्दः
परिग्रहः-शरीरनिर्वाहाधिकार्थार्जनम् १
शरीरधारणार्थकमस्पृहत्वेऽपि परोपनीतं
बाह्योपकरणं वा ॥ ११५१ ॥
परिच्छिन्नत्वम्-भेदप्रतियोगित्वम् १ प्र-
तियोगिसमानसत्ताकात्यन्ताभावप्रतियो-
गित्वं वा २ अत्यन्ताभावाद्यन्यतमप्रति-
योगित्वमिति ग्रं० ॥ ११५४ ॥
परिणामः-पूर्वरूपापाये रूपान्तरापत्तिः १
पूर्वरूपपरित्यागे सति नानाकारप्रतिभा-
स इति प्र० २ पूर्वावस्थापरित्यागे सत्य-
वस्थान्तरप्राप्तिरिति ग्रं० ३ उपादानसम-
सत्ताकत्वे सत्यन्यथाभावः। विवर्तवारणा-
य सत्यन्तम्, घटस्य तन्तुपरिणामत्ववार-

णाय विशेष्यमिति त्रिविधसत्त्वावादे ४ एकविधसत्त्वपक्षे तु उपादानसलक्षणत्वे सत्यन्यथाभावः। मृद्वस्तुनो घटपरिणामत्व-वारणाय विशेष्यम्, प्रपञ्चस्य संवित्परि-णामत्ववारणाय सत्यन्तम्,एतन्मते प्रकृतेरेव परिणामो जगदिति ५ कारणत्वाभिमत-वस्त्वभिन्नत्वे सति तत्कार्यत्वम्। वियदा-दौ ब्रह्मपरिणामत्ववारणाय सत्यन्तम्, मृ-दो घटादिपरिणामत्ववारणाय विशेष्यमि-ति सि० लेशटीकायाम् ॥ ११६० ॥

परिभाषा–उभयवृत्तिधर्मावच्छिन्नसङ्केतव-ती संज्ञा १ आधुनिकसङ्केतो वा २ शास्त्र-कृतासाधारणसङ्केत इति ग्रं० ॥११६१॥

परिमाणम्–गुणत्वे सति मानव्यवहारका-रणम् १ मानपरिमितिव्यवहारासाधारणं का-

रणं वा। दण्डादिवारणाय मानेति, काला दिवारणायासाधारणेति, शब्दत्ववार· णाय कारणमिति २ मानव्यवहाराविषयवृ- त्तिगुणत्वव्याप्यजातिमदिति ग्रं० ॥ ११६६

परिशिष्टम्—अवशिष्टार्थबोधकग्रन्थः ११६७

परिशेषः—प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसङ्गा- च्छि (त्परिशि) ष्यमाणे संप्रत्ययः ११६८

परिशेषानुमानम्—तदितरविशेषाभावव· त्त्वे सति सामान्यवत्त्वरूपो हेतुः॥११६९॥

परिसंख्याविधिः—उभयप्राप्तावितरव्यावृ- त्तिबोधको विधिः, यथा यागाङ्गत्वेन प- शुरशनाग्रहणे कर्तव्ये यागाङ्गत्वाऽविशे- षादश्वगर्दभयोर्द्वयोरशनाग्रहणशङ्कायाम- श्वाभिधानीमादत्ते इति गर्दभरशनाग्र- हणव्यावृत्तिविधिरित्या० १ उभयोश्च युग·

प्त्माप्ताविंतरव्यावृत्तिपरो विधिः, यथा पंञ्च पञ्चनखा भक्ष्या इति । न कलञ्जं भक्षयेदित्यादिनिषेधवाक्येऽतिव्याप्तिवारणायोभयं प्राप्ताविति मी० ॥ ११७१ ॥

परिहारः—दोषाद्युद्धरणम् ॥ ११७२ ॥

परीक्षकः—शास्त्रसंस्कृतमतिः १ प्रमाणेन परीक्ष्य व्यवहर्त्ता वा २ तर्केण प्रमाणैरर्थं परीक्षिता ॥ ११७५ ॥

परीक्षा—तर्कप्रमाणादिना वस्तुतत्त्वावधारणम् ॥ ११७६ ॥

परोक्षज्ञानम् } विषयचित्तादात्म्याऽना-
ज्ञानगतपरोक्षता } पन्नं प्रमाणचैतन्यम् १ अनधिगताबाधितवर्तमानयोग्यविषयचैतन्यभिन्नं प्रमाणचैतन्यमिति ग्रं० ॥ ११७८ ॥

---

१ शशकः शल्लकी गोधा कूर्मः खड्गी ।

**परोपकारः**—परस्य हितादिसंपादनव्यापारः

**पर्य्यवसानम्**—तात्पर्य्यवृत्त्याबोधनम् ११८०

**पर्य्यायः**—समानार्थबोधकः १ नानाशब्दैकार्थबोधको वा २ तत्समानार्थकपदान्तरेण तदर्थकथनं वा ॥ ११८३ ॥

**पशुः**—लोमवल्लाङ्गूलवत्त्वम् *१* हिताहितज्ञानशून्यम् ॥ ११८५ ॥

**पश्चिमा } प्रतीची** } स्वापेक्षयास्ताचलसं (निहिता) युक्ता दिक् ॥ ११८६ ॥

**पश्यन्ती**—नाभिचक्रस्थत्वाद्यभिव्यंग्यो योगिप्रत्यक्षगोचरः शब्दः ॥ ११८७ ॥

**पाखण्डी**—वेदाचारत्यागी १ वेदविरुद्धार्थप्रतिपादको वा ॥ ११८९ ॥

**पाठः**—शास्त्रादिपौनः पुन्येनोच्चारणम् ११९०

पाठव्यसनम् } शास्त्रतात्पर्याग्रहणेन समग्राव-
पाठवासना } स्थाशास्त्रपाठासक्तिः ११९१

पाणिः-मणिबन्धादङ्गुलिपर्यन्तः १ आ-
दानक्रियासाधनमिन्द्रियम् ॥ ११९३ ॥

पात्रम्-स्वयजमानयो रक्षकम् १ पतन्तं
त्रायते ॥ ११९४ ॥

पादः-गमनक्रियासाधनमिन्द्रियम्॥११९५॥

पापकर्म-पापजनकं कर्म ॥ ११९६ ॥

पापम्-(वेद)निषिद्धा(द्धक्रियाज)नुष्ठानज-
न्यम् १. वेदैकप्रतिपाद्यमनर्थं वा । तत्त्रि-
विधम् ॥ ११९८ ॥

पापमध्यमम्-आम्रपनसादिशरीरापाद-
कम् ॥ ११९९ ॥

पापसामान्यम्-लोकेऽयगोगजाश्वत्थतु-
लस्यादिशरीरप्रापकम् ॥ १२०० ॥

पापोत्कृष्टम्–परतापकगुच्छगुल्मवृश्चिकादि-शरीरप्रापकम् ॥ १२०१ ॥

पामरत्वम्–शास्त्रसंस्कारशून्यत्वे सति वि-षयभोगासक्तत्वम् ॥ १२०२ ॥

पायुः–विसर्गक्रियासाधनमिन्द्रियम् ।१२०३॥

पारमार्थिकसत्त्वम्–कालत्रयाबाध्यत्वम् ॥

पारायणम्–भागवतादीनामाद्यन्तपाठाधि-कारेण प्रवृत्तम् ॥ १२०५ ॥

पारिभाषिकः–शास्त्रकारसङ्केतविशेषेण त-त्तदर्थबोधकः शब्दः ॥ १२०६ ॥

पुण्यकर्म–पुण्यजनकं कर्म ॥ १२०७ ॥

पुण्यम्–(वेद) विहिता (तत्क्रियाज) नुष्ठान-जन्यम् । तत्त्रिविधम् ॥ १२०८ ॥

पुण्यमध्यमम्–इन्द्रादिशरीरप्रापकम् १२०९

पुण्यसामान्यम्–यक्षरक्षादिशरीरापादकम्।

पुण्योत्कृष्टम्–हिरण्यगर्भशरीरप्रापकम् ॥
पुनरुक्तम्–अनुवादं विना कथितस्य पुनः कथनम् १ अनुवादान्यत्वे सति पुनर्वचनं वा॥
पुनरुक्तिः–पुनः पुनरुक्तिः १ एकार्थबोधकानेकपदोक्तिर्वा ॥ १२१५ ॥
पुरम्–बहुग्रामीणव्यवहारस्थानम् ॥१२१६॥
पुरश्चरणम्–मन्त्रफलसिद्ध्यर्थमुपोद्घातत्वेन पूर्वसेवनम् ॥ १२१७ ॥
पुराकल्पार्थवादः–ऐतिह्यसमाचरिततया-कीर्तनम् ॥ १२१८ ॥
पुराणम्–पुरातनवृत्तान्तकथनम् १ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च, वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥१२२०॥
पुरुषः–अजन्यत्वे सत्यजनक इति सांख्याः १ पुरुषार्थसम्पादनयोग्यः २ पूर्व-

ष्ठसु वसतीति ॥ १२२२ ॥

पुरुषार्थः—त्रिविधदुःखात्यन्तनिवृत्तिरिति सां० १ सुखावाप्तिर्दुःखपरिहार इति वे०२ पुरुषेण साध्योऽर्थः १२२४ ॥

पुस्तकत्वम्—लिप्याधारत्वम् १ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात्, मूर्खहस्ते न दातव्यं वदेदेवं च पुस्तकम् ॥

पूरकप्राणायामः—इडया(=वामनासिकया) षोडशमात्राभिः प्राणवायोःपानम्॥१२२६॥

पूर्वा } स्वापेक्षयोदयाचलसं(निहिता)युक्ता
प्राची } दिक् ॥ १२२७ ॥

पूर्वपक्षः—शास्त्रीयसंशयनिरासार्थः प्रश्नः१ सिद्धान्तविरुद्धकोटिर्वा २ सिद्धान्तविरोधितर्कोपन्यास इति ग्रं० ॥ १२३० ॥

पूर्वमीमांसा } पूर्व(कर्म) काण्डवेदविचार-
कर्ममीमांसा } (ग्रन्थः) शास्त्रम् ॥१२३१ ॥
पूर्ववदनुमानम्-पूर्वगृहीतव्यक्तिसामान्य-
विषयमनुमानम् ॥ १२३२ ॥
पृच्छा-ज्ञातुमिच्छा ॥ १२३३ ॥
पृथक्त्वम्-पृथग्व्यवहारासाधारणकारणम् ।
पैशून्यम्-परोक्षे परदूषणवचनम् १ पर-
स्मै परोक्षे परदोषप्रकाशनं वा १२३६ ॥
पौरुषेयत्वम्-नूतनानुपूर्वीरचनत्वमिति
केचित् १ पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्य-
धीनानुपूर्वीमत्त्वमिति महादेवः २ सजा-
तीयोच्चारणानपेक्षो (च्चारणविषय) च्चारित-
त्वम्, यथा भारतादिरिति चिन्तमणौ ॥
प्रकरणम्-एकार्थ प्रतिपादकग्रन्थांशः *१*
शास्त्रसिद्धान्तप्रतिपादकग्रन्थः २ शास्त्रैकदे-

शसम्बद्धत्वे सति शास्त्रकार्यान्तरे स्थितम् ३ मीमांसकास्तु उभयाकांक्षा, यथा प्रयाजादिषु । शाब्दबोधकारणीभूताकाङ्क्षाया अतिप्रसङ्गस्तद्वारणायोभयेति विशेषणम् ४ अङ्गवाक्यसापेक्षं प्रधानवाक्यमिति ग्रं०

प्रकृतिः—प्राचीनकर्मसंस्काराधीनस्वभावः *१*तत्त्वान्त (रोपादानम्) रारम्भकत्वं प्रकृतित्वम् २ अजन्यत्वे सति जनकत्वं वेति सांख्यमते ३ प्राथमिकविधिप्रतिपादितसमग्रेतिकर्त्तव्यताकत्वमिति मी० ४ कार्याकारेण विक्रियमाणत्वमिति न्या०५ सत्त्वरजस्तमोगुणानांसाम्यावस्था इति वे० ६ अर्थाववोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः ७ तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूत

त्वं नेति वैयाक० ॥ १२५२ ॥
प्रतिग्रहः—अदृष्टार्थत्यक्तद्रव्यस्वीकारः ॥
प्रतिज्ञा—उत्तरकाले स्वकर्तव्यत्वेन निर्देशः १ कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारो वा *२* पक्षे साध्यनिर्देशः ३ साध्यविशिष्टपक्षबोधजनकवचनं वा, यथा पर्वतो वह्निमानिति ॥ १२५७ ॥
प्रतिज्ञाहानिः—प्रतिज्ञातार्थपरित्यागः १ स्वकृतोक्तपरित्यागो वा ॥ १२५९ ॥
प्रतितन्त्रसिद्धान्तः—वादिप्रतिवाद्येकतरमात्राभ्युपगतः सिद्धान्तः ॥ १२६० ॥
प्रतिपादनम्—प्रतिपाद्यं मुखतः प्रतिज्ञाय पश्चात्तत्सिद्धिहेतुप्रदर्शनम् । प्रतिपाद्यं प्रतिज्ञाय हेतुवर्णनमित्युक्त (मु)उपोद्घातेऽपि प्रसङ्गस्तदर्थं मुखत इति, अवयवविपर्या-

सेनाऽप्रासकालतां व्यावर्तयति पश्चादि-
ति, असम्बद्धहेतुव्यावृत्त्यर्थं नात्सिद्धि-
रिति विवरणं ॥ १२६१ ॥

प्रतिबन्दी—अनिष्टान्तरप्रसञ्जकं वाक्यम् १,
नोद्यपरिहारसाम्यं वा २ प्रकृतैककल्पे
प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापाद-
नमिति ग्रं० ॥ १२६४ ॥

प्रतिबन्धः—कार्यानुकूलकिञ्चिद्धर्मविघटकः,
यथाऽग्नौ दाहरूपकार्यानुकूलस्य कस्यचि-
द्धर्मस्य शक्त्याख्यस्य विघटको मणिमन्त्रौ-
षधादिः ॥ १२६५ ॥

प्रतिबन्धकत्वम्—कारणीभूताभावप्रतियो
गित्वम् १ पुष्कलकारणे सति कार्योत्पा-

---

१ यदि पुरुषत्वादयं चौरस्तदा एवं त्वमपि चौरः स्या इत्यापादनमित्यर्थः ।

दविरोधित्वं वा। सामग्र्यभावं व्यावर्तयितुं पुष्कलेति २ सामग्रीकालीनकार्यानुत्पाद-प्रयोजकत्वमिति ग्रं० ॥ १२६८ ॥

प्रतिबिम्बत्वम्—तदधीनत्वे सति तत्स-दृशत्वम् १ उपाधिनिमित्तस्वप्रतियोगिक-व्याप्यन्तरविभेदकत्वे सत्युपाधिपरिच्छिन्न-त्वमिति सङ्क्षेपशा०टी०म० २ उपाध्यन्त-र्गतत्वे सति औपाधिकपरिच्छेदशून्यत्वे सति बहिः स्थितस्वरूपकत्वम्। बिम्बवा-रणायाद्यम्, घटाकाशादिवारणाय द्वितीयम्, दर्पणाद्यन्तर्गततदन्वयववारणाय तृतीयमिति न्यायरत्नावल्यां गौडब्र० ॥

प्रतिभाप्रमाणम्—श्वस्ते भ्राताऽऽगन्ते-

१ सामग्रीकालीनो यः कार्यानुत्पादः त-त्प्रयोजकत्वव्याप्यत्वमित्यर्थः।

यादिकम् ॥ १२७२ ॥

**प्रतियोगित्वम्**–विशिष्टप्रतीतिविषयाविशेषणत्वम् १. धर्मिभिन्नत्वे सति भेदनिरूपकत्वं वा २ यस्याभावः, सम्बन्धः, सादृश्यं वा सः १२७५ ॥

**प्रतिवादी**–वादिप्रयुक्तन्यायवाक्यविरुद्धवाक्यवादी ॥ १२७६ ॥

**प्रतीकः**–आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः *१*तद्भिन्नत्वे सति तदर्थबोधकम्।

**प्रतीकोपासन(ना)म्**–ब्रह्मप्रतीकानामादित्यादीनां ब्रह्मदृष्ट्युपासनम् । तच्च सम्पदारोपसंवर्गाध्यासभेदाद्द्विविधम् १२७९

| | |
|---|---|
| प्रत्यक्षम्<br>अपरोक्षम्<br>साक्षात्कारः | इन्द्रियसंप्रयोगजं ज्ञानम् १ इन्द्रियार्थसंनिकर्षोत्पन्नज्ञानं |

वा । सन्निकर्षध्वंसवारणाय ज्ञानमिति,

अनुमित्यादिवारणायेन्द्रियार्थसन्निकर्षे-ति नैं० २ व्याप्त्याद्यजन्यत्वे सति स्व-कालावच्छिन्नार्थबोधत्वं प्रत्यक्षत्वम् ३ अ-परेऽनुपलब्ध्यर्थापत्तिशब्दानुमानोपमा-नजप्रमितिव्यतिरिक्तत्वे सति प्रमितित्व-म् । अनुमादावतिव्याप्तिवारणायानुपल-ब्ध्यरित्यादिविशेषणम्, घटादिवारणाय-प्रमितित्वमिति ४ तत्तादिन्द्रिय (प्रमाण-चैतन्यस्य) योग्यवर्तमानविषयावच्छिन्न-चैतन्याभिन्नत्वम् ५ योग्यत्वे सति वर्त-मानविषयचैतन्याभिन्नप्रमाणचैतन्यविषय-त्वं वेति वेदा० । तच्च ज्ञानगतविषयग-तभेदेन द्विविधं ल०तत्तच्छ.[१२०पृ०]द्रं०

प्रत्यक्षप्रमा–ज्ञानाकरणकं ज्ञानमिति न्या० १. विषयचैतन्याभिन्नं प्रमाणचैतन्यम् । अ-

नुमित्यादावतिव्याप्तिवारणाय विषयेति, भ्रमप्रत्यक्षेऽतिव्याप्तिव्यावृत्त्यर्थं प्रमाणेति २ यद्वा, अनधिगताबाधितवर्तमानयोग्यविषयचैतन्याभिन्नं प्रमाणचैतन्य [३५ पृ०]म् ३ अबाधितापरोक्षार्थविषयज्ञानमित्यद्वैतकौ० ॥ १२८९ ॥

प्रत्यक्षप्रमाणम्—प्रत्यक्षप्रमाकरणम् । प्रमाकरणानुमानादावतिव्याप्तिवारणाय प्रत्यक्षेति, भ्रमप्रत्यक्षकरणेऽतिप्रसङ्गवारणाय प्रमापदम् *१* इन्द्रियसञ्चारमार्गेण बाह्यवस्तुसम्बन्धाच्चित्तस्येन्द्रियसन्निकृष्टार्थविशेषावधारणप्रधाना वृत्तिः, यथा घटोऽयमित्यादि इति सांख्ययोगमते ॥ १२९१ ॥

प्रत्यक्षबाधः—तत्त्वमस्यादिवाक्योत्थात्मसाक्षात्कारेणाऽज्ञानतत्कार्यनिवृत्तिः १२९२

प्रत्यभिज्ञाप्रत्यक्षम्–तत्तेदन्तावगाहिज्ञान-
म् । संस्कार(इन्द्रियसंप्रयोगोभ) सन्निक-
र्षोभयजन्यं ज्ञानम्, यथा सोऽयं देवदत्त
इति योगमं० ॥ १२९४ ॥
प्रत्ययः–प्रकृतिमवधीकृत्य विधीयमानः स्वा-
र्थबोधकः शब्दविशेषः । तदर्थान्वितस्वा-
र्थबोधने तदपेक्षत्वे सति तदवधिकत्वेन वि-
धीयमानत्वं प्रत्ययत्वम् ॥ १२९६ ॥
प्रत्याहारः–इन्द्रियाणां स्वस्वविषयेभ्यः प्र-
त्याहरणम् ॥ १२९७ ॥
प्रधानम्–सत्त्वरजस्तमो (मसां) गुणसा-
म्यावस्था ॥ १२९८ ॥
प्रध्वंसाभावत्वम्–जन्यत्वे सत्यविनाशि-
त्वम् । अविनाशित्वे सति प्रतियोगिस-
मवायिमात्रवृत्त्यभावत्वं वा ॥ १३०० ॥

प्रपञ्चः—दृश्यत्वं जडत्वं परिच्छिन्नत्वं चि-
द्भिन्नत्वं च प्रपञ्चसामान्यलक्षणम् ॥ १३०१ ॥
प्रमा—अविसंवाद्यनुभव इति बौद्धाः १ अ-
व्यभिचार्यनुभव इति भाट्टदेशीयः २
यथार्थानुभवः ३ प्रमाणजन्यं ज्ञानं वेति
नै० ४ संशयविपर्ययाविकल्पस्मृतिरूपाचि-
त्तवृत्तिभिन्ना या चित्तवृत्तिः सेति सां० ५
अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहे-
तुरिति यो० ६ बोधेद्धा[1] वृत्तिर्वृत्तीद्धबोधो[2]
वा ७ स्मृतिभिन्नत्वे सत्यबाधितार्थगोच-
रज्ञानं वेति वेदा० ८ सा द्विविधा जीवाश्र-
या ईश्वराश्रया चेति ल० तत्तच्छब्दे [७२
+११९ पृष्ठे] द्र० ॥ १३०२ ॥

---

१ बोधेनेद्धा प्रकाशिता (प्रतिफलिता)।
२ वृत्तौ प्रतिबिम्बितं चैतन्यम्।

प्रमाणम्–प्रमाकरणम् । छिदादिकरणकुठा-
रादावतिव्याप्तिवारणाय मापदम्, भ्रम-
ज्ञानकरणदुष्टचक्षुरादावतिव्याप्तिवारणाय
प्रपदम्, प्रमाप्रमाणमित्युक्तेऽसम्भवः स्या-
दतः करणमित्युक्तमितमपरदासः १ व्या-
पारवत्तासंबन्धेन प्रमितिविभाजकोपाध्य-
वच्छिन्नासाधारणकारणम् । चाक्षुषादिप्र-
मित्यसाधारणकारणे विषयेन्द्रियसंबन्धादौ
व्यापारेऽतिव्याप्तिवारणाय व्यापारव-
त्तासम्बन्धेनेति, अन्यप्रमाणस्यान्यप्रमा-
णत्वापत्तिवारणाय विभाजकोपाध्यव-
च्छिन्नेति, चाक्षुषादावपि व्यापारवत्तासं-
बन्धेन मनसः कारणत्वात्तत्रातिव्याप्तिवा-
रणायासाधारणेति पु० २ असंदिग्धावि-
परीतानधिगतविषयकबोधरूपप्रमाकरणम् ।

संशयाविपर्ययस्मृतिकरणेऽत्रतिप्रसङ्गवार-
णायोपात्तं बोधरूपप्रमांशे क्रमशो विशेषण-
त्रयमिति योगमञ्जर्याम् ३ साधनाश्रया-
व्यतिरिक्तत्वे सति प्रमाव्याप्तत्वं प्रमाणत्व-
मिति सर्वद० सं० ४ संवादिप्रवृत्तिजनन-
योग्यज्ञानजनकत्वमिति ब्रह्मविद्याभरणे
५ दोषासहकृतज्ञानकरणत्वमित्यद्वैतसिद्धौ
६ अज्ञात (तार्थ) ज्ञापकत्वमित्यद्वैतमते ७
प्रमीयतेऽनेनेति ॥ १३१६ ॥

प्रमाणगताविपरीतभावना-श्रुतीनामहे-
यानुपादेयब्रह्मप्रतिपादकत्वे निष्फलत्व-
प्रसङ्गाच्छ्रुतयः कर्मपरा एवेति निश्चयात्मि-
का चित्तवृत्तिः ॥ १३१७ ॥

प्रमाणगताऽसम्भावना—ब्रह्मणो घटा-
दिवत्सिद्धत्वेन मानान्तरगम्यत्वाच्छ्रुतिस्त-

त्प्रतिपादिका कथं भवेत् ? फलाभावान्न भवेदेवेत्याकारिका चित्तवृत्तिः ॥१३१८॥

प्रमाणचैतन्यम्—अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम् ॥ १३१९ ॥

प्रमाता—अन्तःकरणविशिष्टचैतन्यम् १ प्रमाश्रयो वा २ प्रमाणैर्योऽर्थं प्रमिणोति सः

प्रमादः—कर्त्तव्येऽकर्त्तव्यत्वधिया ततो निवृत्तिः १ अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तिर्वा २ प्रयत्नेन कर्तव्ये कार्ये विस्मृतिर्वा ॥ १३२३ ॥

प्रमेयगतविपरीतभावना—योग्यं योग्येन संबध्यते, इति न्यायात्त्रिगुणात्मकप्रपञ्चोपादानं त्रिगुणात्मिका मायैव न ब्रह्मेति निश्चयात्मिका चित्तवृत्तिः १३२४

प्रमेयगताऽसम्भावना—ब्रह्मणस्सच्चिदा-

नन्दरूपिणोऽनृतजडदुःखात्मकप्रपञ्चाद्विल-
क्षणत्वेन तत्कारणत्वं कथं भवेत् ? न भ-
वेदेवेत्याकारिका चित्तवृत्तिः ॥ १३२५ ॥

प्रमेयचैतन्यम् } अज्ञातं घटाद्यवच्छिन्नचैत-
विषयचैतन्यम् } न्यम् १. विषयप्रकाशकं वि-
षयाधिष्ठानभूतं चैतन्यं २।

प्रमेयत्वम्-प्रमाणजन्यज्ञानविषयत्वम् १३२७

प्रयत्नः-करोमीत्यनुभवविषयवृत्तिगुणत्वव्या-
प्यजातिमान् ॥ १३२८ ॥

प्रयोगः-शब्दादीनामुच्चारणम् ॥१३२९॥

प्रयोगविधिः-प्रयोगप्राशुभावबोधको वि-
धिः १ अङ्गानां क्रमबोधको विधिरिति ग्रं०

प्रयोजकः-कार्यादौ भृत्यादीन् प्रयुनक्ति
*१* साक्षात्परम्परया वा कारणत्वं प्रयो-
जकत्वम् २ अन्यथासिद्धिशून्यत्वे सति

कार्याऽव्यवहितपूर्ववर्त्तित्वं वा ॥ १३४४ ॥

प्रयोजनत्वम्-प्रवृत्तिहेत्विच्छाविषयत्वम्।

ज्ञानसुखत्वादिवारणार्थं प्रवृत्तिहेत्विति १

बुद्धिविषयत्वे सति स्वसंबन्धितयेच्छावि-

षयत्वमिति ग्रं० ॥ १३४५ ॥

प्रयोज्यत्वम्-साक्षात्परम्परया वा जन्यत्वम्

प्रलयः-त्रैलोक्यनाशः १ भूतादिलयाधार-

कालो वा २ सकलभावकार्यविनाशो वेति

ग्रं० ३ स च नित्यनैमित्तिकदैनिकमहा-

ऽऽत्यन्तिकभेदात्पञ्चविधः, सुप्तिमूर्छामृतिः

पुनःशरीरप्राप्तिर्दैनंदिनमिति प्रकारान्तरे।

प्राणिनां सुषुप्तिः-नित्यप्रलयः। ब्रह्मणः

सुषुप्तिः-दैनिकः। स्थूलशरीरान्निर्गमनं-

मृतिः। शरीरवियोगक्षणमारभ्य पुनःसु-

खाद्युपलब्धिपूर्वक्षणपर्यन्तमवस्थितिः-पुनः

शरीरप्राप्तिः । समष्टिलिङ्गशरीरलयादिर्दैनं
दिनं शेषः तत्तच्छ० [६२—१४२ पृष्ठे] द्र०॥

प्रलापः } निरर्थकोक्ति (प्रलापः) वादः १
अतिवादः } निष्प्रयोजनानर्थकवाक्यं वा ॥

प्रवचनम्—अर्थानुसन्धानपूर्वककथनम् ॥

प्रवर्तकत्वम्—इष्टसाधनताविषयकं साध्य-
ताज्ञानमिति न्या० १ स्वविशेषणवत्ताप्र-
तिसन्धानजन्यं कार्यताज्ञानमिति गुरवः२
अन्याप्रेरितत्वे सति तादृशलिङ्गुच्चारयितृ-
त्वमिति मतान्तरे ॥ १३५५ ॥

प्रवर्तना—प्रवृत्त्यनुकूलो व्यापारः॥१३५६॥

प्रवृत्तिः—स्वस्वविषये इन्द्रियादीनां सञ्चारः
*१* शब्दानामर्थबोधनशक्तिः *२* रा-
गजन्यो रागविषयको गुण इति नै०१३५९

प्रशंसा—गुणाविष्कारेण स्तुतिः ॥१३६०॥

प्रश्नः-वाग्व्यवहारविशेषः १. प्रतिवचनानन्तरमाक्षेपोत्थानं वा २ अविज्ञातार्थज्ञानार्थमिच्छाप्रयोज्यवाक्यमिति बृह० १.२६.३

प्रसङ्गः-लक्ष्ये लक्षणसम्बन्धः॥१॥ निरूपणयोग्यत्वम् ॥२॥ स्मृतस्योपेक्षाऽनर्हत्वम्

प्रसङ्गसङ्गतिः-उपोद्घातादिभिन्नत्वे सत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् ॥ १२६७ ॥

प्रस्तावना-ग्रन्थावतारणार्थव्याख्यानांशः १. अमुख्यार्थप्रतिपादकत्वे सति मुख्यार्थप्र(उपोद्घातः) वर्तिका वा ॥ १२६९ ॥

प्राकृतप्रलयः-कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशः ॥ १२७० ॥

---

१ स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वमित्यस्यार्थः गदाधरेणोक्तः ।

प्रागभावत्वम्–ध्वंसप्रतियोगित्वे सत्यभावत्वम् १ अजन्यत्वे सति विनाशित्वम् । घटादिवारणाय सत्यन्तम्, परमाणुवारणाय विनाशित्वमिति म० २ कार्यसमवायिकालान्यावृत्तित्वे सति कार्योत्पत्तिपूर्वकालीनाभावः। ध्वंसेऽतिव्याप्तिवारणाय कार्योत्पत्तिपूर्वकालीनेति ग्रं० ॥१३७३॥

प्राग्लोपदोषः–उत्तरोत्तरेणैव पूर्वपूर्वकार्यसम्भवे पूर्वेषामन्यथासिद्धिः ॥ १३७४ ॥

प्राज्ञः–सुषुप्तौ विलीनेऽन्तःकरणेऽज्ञानमात्रसाक्षी १ व्यष्टिकारणशरीरमात्रोपहितं चैतन्यमिति ग्रं० ॥ १३७६ ॥

प्राणः–शरीरान्तः सञ्चारी वायुः। महावात्यादावतिव्याप्तिवारणाय विशेषणम्, मन आदिवारणाय विशेष्यम्, धनञ्जयवारणा-

य सञ्चारीति न्या० १ प्राग्गमनवान्नासाग्र-
वर्ती वायुरित्यपरे २ मिलितसमस्तापञ्ची-
कृतपञ्चमहाभूतराजसांशकार्यत्वे सति क्रि-
याशक्तिप्रधानवायुरिति वे० ३ हृदि प्राणो
गुदेऽपानः समानो नाभिदेशगः, उदानः
कण्ठदेशस्याद् व्यानः सर्वशरीरगः १३७९

प्राणमयकोशः-कर्मेन्द्रियैः सहितः प्राणः

प्राणायामः-प्राणवृत्तिनिरोधः १ निःश्वा-
सोच्छ्वासयोर्गतिविच्छेदकारकव्यापारो
वा २ रेचकपूरककुम्भकलक्षणः प्राणनि-
ग्रहोपायः ॥ १३८२ ॥

प्रातिपदिकम्-अर्थवदधातुरप्रत्ययः *१*
त्रित्यर्थशून्यत्वे सति व्यक्तिमात्रार्थत्वम्

प्रातिभासिकत्वम्-ब्रह्मज्ञानेतरबाध्यत्व-

---

१ ऊर्ध्वगमनवान् । २ विष्वग्गमनवान् ।

मित्यद्वैतसिद्धौ १ आगन्तुकदोषसहकृताविद्याकार्यत्वमिति तारानाथः २ अज्ञातगोचरवृत्त्यनुपहितवृत्त्युपहिताविशेषचैतन्यविषयत्वे सति विषयसत्ताप्रयोजकदर्शनविषयत्वमिति ग्रं० ॥ १३८७ ॥

प्रातिभासिकसत्त्वम्–प्रतिभासकालाबाध्यत्वम् ॥ १३८८ ॥

प्रादुर्भावः–पूर्वरूपरसादिनाशपूर्वकं रूपरसाद्यन्यतरोत्पत्तिः ॥ १३८९ ॥

प्रामाण्यम् }<br>प्रमात्वम् } तद्वतितत्प्रकारकज्ञानत्वम् । इच्छावृत्तिवारणाय ज्ञानत्वमिति, भ्रमेऽतिप्रसङ्गवारणाय तद्वतीति ॥

प्रायश्चित्तम्–पापक्षयमात्रसाधनं कर्म यथा कृच्छ्रचान्द्रायणादि । मात्रशब्दात् तुला-

१ काचनिद्रादि ।

पुरुषाश्वमेधादिव्यावृत्तिः १ प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते, तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते ॥१३९२॥

प्रारब्धकर्म—वर्तमानशरीरारम्भकं कर्म १ प्रारब्धकार्यसुखदुःखादिरूपं युगकल्पादिपर्यन्तमनुभोक्तव्यं येन तत् ॥ १३९४ ॥

प्रीतिः—दयारसार्द्रान्तःकरणवृत्तिविशेषः ॥

प्रेरकत्वम्—तदनुकूलप्रयत्नाधारत्वम् *१* प्रवृत्त्यनुकूलव्यापारसाधकत्वम् ॥१३९७॥

प्रैषः—प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना ॥ १३९८ ॥

प्रौढिवादत्वम्—स्वबुद्ध्युत्कर्षख्यापनत्वम् १ प्रतिवाद्युक्तिः स्वीकारत्वे सति स्वमत (तोत्कर्षबोधन) दोषपरिहारत्वं वा ॥१४००॥

प्रौढोक्तिः—उत्कर्षस्याहेतावुत्कर्षहेतुत्वक-

रूपनम् ॥ १४०१ ॥

फ

फलम्—ससाधनसुखदुःखोपभोगः *१* प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिप्रयोजनम्, यथा अथ सम्पत्स्य- इत्यद्वितीयज्ञानात्तत्सम्पत्तिरूपम् ॥१४०३॥

फलचैतन्यम्—ज्ञातं घटाद्यवच्छिन्नचैतन्यम् १ अन्तःकरणवृत्त्यभिव्यक्तं चैतन्यं वा २ विषयावच्छिन्नं चैतन्यमभिव्यक्तमिति मतान्तरे ॥ १४०६ ॥

फलव्याप्तिः—स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वम् ॥ १४०७ ॥

---

१ अन्तःकरणवृत्त्यभिव्यक्तम्—घटादिविषयचैतन्याभिन्नमन्तःकरणवृत्तिप्रतिबिम्बि ] तं चैतन्यम् ।

फलव्याप्यत्वम्—वृत्तिबिम्बितचिदभिव्यक्तचैतन्याश्रयत्वमित्यद्वैतदीपिकायाम् ॥

फलोपकारकाङ्गम्—स्वव्यापारातिरिक्तव्यवधानराहित्येन प्रधानोपकारकम्, यथा प्रयाजादि अदृष्टरूपेण स्वव्यापारमात्रेण प्रधानयागस्य ॥ १४०९ ॥

फलोपधायकत्वम्—कार्याव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्टत्वम्, यथा कुलालहस्तदण्डः ॥ १४१० ॥

## ब

बधः } बाधा } प्राणवियोगफलकव्यापारः ॥१४११॥

बन्धः—सत्यत्वेन ज्ञायमानो दृश्यसंबन्धः १ आत्मनोऽज्ञानतत्कार्यसंबन्धो वा॥२॥अणिमाद्यष्टैश्वर्याशा।सिद्धसंकल्पः ३ देवमनुष्याद्यु-

पासनाकामसंकल्पो वा ४ यमाद्यष्टाङ्गयोगसं-
कल्पो वा ५ वर्णाश्रमधर्मकर्मसंकल्पो वा ६
यागव्रततपोदानविधिविधानज्ञानसम्भवो
वा ७ केवलमोक्षापेक्षा(क्षया)सङ्कल्पो वा ८
सङ्कल्पमात्रसम्भवो वा ॥ १४२१ ॥

बन्धुः—संबन्धेनोपक(कारकः)र्ता ॥१४२२॥

बलम्—विचित्रकार्यानुकूलशक्तिः ॥१४२३॥

बहुव्रीहिसमासत्वम्—संबन्धिलाक्षणिक-
त्वव्याप्योत्तरपदकत्वम् ॥ १४२४ ॥

बहूदकम्—बहूनि उदकानि शौचाङ्गतया यस्य

बाधः—पूर्वप्रत्ययस्य व्यधिकरणप्रकारकत्व-
निश्चयः १ पक्षनिष्ठप्रमाविषयत्वप्रकाराभा-
वप्रतियोगिसाध्यको वेति न्या० २ अप-
रोक्षमिथ्यात्वनिश्चयः ३ सविलासाविद्या-
निवृत्तिर्वा ४ प्रतीतार्थं परित्यज्यान्यार्थ-

कल्पनमित्यद्वैतदीपि०५ स त्रिविधः शास्त्रीयो यौक्तिकः प्रत्यक्षश्चेति ल० तत्त्वच्छन्दे [१७५] द्व० ॥ १४३० ॥

बाधसामानाधिकरण्यम्—अन्यतरस्य बाधेन सामानाधिकरण्यम्, यथाऽभासवादिमतेऽन्तःकरणप्रतिबिम्बितस्य जीवस्य बाधेन ब्रह्मणा सामानाधिकरण्यम् (अभेदः), यथा वा जगतो बाधेन सर्वं खल्विदं ब्रह्मेत्यादिश्रुत्युक्तं जगतो ब्रह्मणा सामानाधिकरण्यम् ॥ १४३१ ॥

बालः—शास्त्रार्थज्ञानविवेकशून्यः १ अधीतव्याकरणकाव्यकोशोऽनधीतवेदान्तशास्त्रः। कणादादावतिव्याप्तिवारणायानधीतवेदान्तेति, स्तनंधयेऽतिप्रसक्तिवारणायाधीतव्याकरणेति वे० ॥ १४३३ ॥

बाह्यप्रत्यक्षप्रमा—स्मृतिभिन्नत्वे सत्यबाधितबाह्यार्थगोचरज्ञानम् ॥ १४३४ ॥

बिम्बत्वम्—उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सति औपाधिकपरिच्छेदरहितत्वमिति सं० टी० १ उपाध्यनन्तर्गतत्वे सति उपाध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वमिति सि० न्यायरत्ना० गौ० ॥

बुद्धिः—निश्चयात्मिकान्तःकरणवृत्तिरिति वे० १ जानामीत्यनुव्यवसायविषयगुण इति न्या० ॥ १४३८ ॥

ब्रह्मचर्यम्—उपस्थसंयमः १ अष्टाङ्गमैथुन-

---

१ स्त्रिया दर्शनं ( = रागपूर्वकं रूपादिविषयकज्ञानम् ) स्पर्शनं ( = रागपूर्वकं क्रियाविशेषजन्यं ज्ञानम् ) केलिः ( = रागपूर्वकः परिहासादिव्यवहारः ) कीर्तनं गुह्यभाष-

वर्जनं वा ॥ १४३९ ॥

ब्रह्म-निखिलनामरूपात्मकप्रपञ्चाकारेण परिणममानमायाऽधिष्ठानम् १ बृहत्त्वं बृंहणत्वं वा ॥ १४४२ ॥

ब्रह्मणस्तटस्थलक्षणम्-जगदुत्पत्तिस्थितिलयकारणत्वम् १. जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वं वा २ भूतोपादानत्वे सति कर्तृत्वम् । कुलालादावतिव्याप्तिपरिहाराय भूतेति, मायायामतिव्याप्तिनिवृत्तये कर्त्रेति वे० तत्त्ववि० ३ निखिलज-

---

णं (=रागपूर्वकं रहसि सम्भाषणम्) संकल्पः (= इयं मे स्यादिति ) अध्यवसायः ( =अनया रमिष्ये इति ) क्रियानिर्वृत्तिश्चेत्यष्टौ मैथुनस्याङ्गानि ।

१ बृंहणत्वम्—शरीरवृद्ध्यादिहेतुत्वम् ।

गदुपादानत्वम् । शुद्धयवच्छिन्ने चैतन्येऽति-
व्याप्तिवारणाय निखिलेति, असम्भववार-
णाय जगत्पदमिति पु० ४ सकलकार्योपा-
दानगोचरापरोक्षज्ञानाश्रयत्वे सति स-
कलकार्योपादानगोचरचिकीर्षाश्रयत्वे स-
ति सकलकार्योपादानगोचरकृत्याश्रयत्व-
मित्यमरदासः ॥ १४४७ ॥

ब्रह्माण्डम्—स्वावरणभूतलोकालोकपर्वत-
तद्बाह्यपृथिवीतद्बाह्यसमुद्रैः सहिता १४४८

ब्रह्मानन्दः—द्वैतभानाभावविशिष्टनिद्राऽभा-
वकालीनब्रह्माभिमुखवृत्त्यभिव्यङ्ग्यानन्दः ॥

ब्राह्मणत्वम्—ब्राह्मणेतरावृत्तित्वे सति
सकलब्राह्मणव्यक्तिवृत्तित्वम् १ तपः श्रुतं
च योनिश्च ह्येतद्ब्राह्मणकारणम्, तपःश्रु-
ताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

ब्राह्मणभागः—कर्मविधायकं वाक्यम् १ मन्त्रतात्पर्यार्थप्रकाशको वेदभागो वेति ऋग्वेदभाष्ये माधवाचार्यैः २ वेदत्वे सति मन्त्राभिन्नत्वम् । कल्पसूत्रादिवारणाय वेदत्वे सतीत्युमापतिः ३ तच्च त्रिविधं विधिरूपमर्थवादरूपं तदुभयविलक्षणञ्च ल० तत्तच्छब्दे[ ४४ पृष्ठे] द्र० ॥१४५२॥

ब्राह्मणस्य विद्वत्संन्यासः—अपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्यागपूर्वकसलिङ्गकत्वमिति जी. वि. टी. ॥

भ

भक्तिः—आराध्यत्वेन ज्ञानम् १ आराध्यविषयकरागत्वं भक्तित्वमिति शांडिल्यसूत्रभाष्ये ॥ १४५८ ॥

भयम्—विषयविशेषदर्शनश्रवणानिबन्धन-

श्चेतसोऽनवस्थानम् ॥ १४५७ ॥

भागत्यागलक्षणा—शक्यैकदेशपरित्यागेनैकदेशे वृत्तिः, यथा तत्त्वमसीत्यादिवाक्ये सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धांशपरित्यागेन चिन्मात्रयोरभेदः १ शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणेति न्या० ॥ १४५९ ॥

भारतम्—भरतवंश्यानधिकृत्य कृतो लक्षश्लोकात्मको ग्रन्थः ॥ १४६० ॥

भारतवर्षम्—उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे, वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ १४६४ ॥

भावत्वम्—समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वमिति न्या० १ विधिमुखप्रतीतिविषयत्वम् २ प्रतियोग्यनपेक्षानिरू-

पणत्वं वेति वे० ॥ १४६४ ॥

भावना—भवितुर्भवनानुकूलो भाव (पितु-र्वा ) कव्यापारविशेषः । सा द्विधा शाब्दीभावना आर्थीभावना चेति ल० तत्त्वच्छेदे [६६ पृ०] द्र० ॥ १४६५ ॥

भावनासंस्कारः जन्यज्ञानजन्यसंस्कार इति नवीनमते १ पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारः । आत्मादिवारणाय प्रथमदलम्, अनुभवध्वंसवारणाय द्वितीयदलमिति प्राचीनमते ॥ १४६७ ॥

भावविकारः—पूर्वावस्थापरित्यागे सत्यवस्थान्तरापत्तिः । जायते[२]ऽस्ति-

---

१,भावः—क्रिया निर्वर्त्यो योऽर्थः क्रियैव वा, क्रियायाः फलं वा यथा ओदनं पचाति देवदत्तः।

२ अस्ति—जातस्य कार्यस्य क्षणमवस्था-

वर्द्धतेपरिणमतेऽपक्षीयते विनश्यतीतिभे-
दात् षड्विध इति निरुक्ते ॥ १४६८ ॥

भाविकालः } सूर्यपरिस्पन्दादिक्रियाप्राग-
भविष्यकालः } भावावच्छिन्नः कालः १
वर्तमानप्रागभावप्रतियोगित्वमिति सार-
मञ्जर्याम् ॥ १४७० ॥

भाषा–प्रतिज्ञासूचकवाक्यम् १ भाषणं, भा-
ष्यतेऽनयेति वा ॥ १४७१ ॥

भाष्यम्–सूत्रार्थो वर्ण्यते यत्र वाक्यैः (पदैः)
सूत्रानुसारिभिः, स्वपदानि च वर्ण्यन्ते भा-
ष्यं भाष्यविदो विदुः । सागरादिवर्णनस्य
भाष्यत्वव्यावृत्तये सूत्रार्थेति, पदवृत्तिव्या-

---

नम् । २ वर्द्धते—शरीरस्य भूयोभिरवयवैः
सम्बन्धः । ४.अपक्षीयते–भूयोभिरवयवैर्विश्ले-
षः शेषस्तत्तच्छब्दे [ ११२-१५८ पृ० ] द्र० ।

वृत्तये वाक्यैरिति, वार्तिकस्य तत्त्वनि-
रासाय सूत्रानुसारिभिरिति, वृत्तेस्त-
त्त्वव्यावृत्त्यर्थमुक्तं स्वपदानीति पाराश-
रोपपुराणे ॥ १४७२ ॥

भिक्षा—ग्रासमात्रमन्नम् १ ग्रासमात्रं भवे-
द्भिक्षा पुष्कलं तु चतुर्गुणम्, पुष्कलानि
च चत्वारि हन्तकारो विधीयते॥१४७४॥

भिक्षुः—भिक्षोपजीवी १ भिक्षाकारकः २
चतुर्थाश्रमी वा ३ यतिश्च ब्रह्मचारी च
विद्यार्थी गुरुपोषकः, अध्वगः क्षीणवृत्तिश्च
षडेते भिक्षवः स्मृताः। भिक्षत इति १४७७

भूतकालः } सूर्यपरिस्पन्दादिक्रियाध्वंसा-
अतीतकालः } वच्छिन्नः कालः १ वर्तमानध्वं
समातियोगि(समयवृत्ति)त्वमतीतत्वम् २ तद्वृ-
त्तित्वे सति आरब्धपरिसमाप्तत्वं भूतत्वम्॥

भूतत्वम्–व(आत्मान्यत्वे) हिरिन्द्रियग्राह्य-विशेषगुणवत्त्वम् । आत्मन्यतिव्याप्तिवारणाय व (अन्य) हिःपदम्, कालादावतिव्याप्तिवारणाय विशेषेति, द्रव्यत्वमादायातिव्याप्तिवारणाय गुणेति ॥१४८१॥

भूतप्रतिबन्धः–पूर्वानुभूतविषयस्यावेशेन पुनः पुनः स्मरणम् ॥ १४८२ ॥

भूतार्थवादः–प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोऽर्थवादः,यथा इन्द्रो वृत्राय वज्रम(मुद)यच्छदित्यादिरिति मी०१ तत्काले तद्गुणज्ञापकः शब्द इति न्या० ॥

भूमिका–अन्यरूपेऽन्यप्रवेश इति नाटकमते १ हर्म्यादेरुत्तरोत्तरभूमिवच्चित्तज्ञानान्यतरस्यावस्थाविशेषः ॥ १४८६ ॥

भूरादिलोकः–प्राणिनां कर्मज्ञानफलभोग-

स्थानविशेषः ॥ १४८७ ॥

भेदः—पृथक्करणम् १ अन्योन्याभावो वा ॥

भेदाभावः—मानाभावादयुक्तेश्च न भिदे-श्वरजीवयोः, जीवानामात्मनां चैव नात्मनो न परस्परमिति भेदाधिकारे ॥ १४९० ॥

भोक्ता—सुखदुःखाकारवृत्त्युपहितं चैतन्यम्

भोगः—सुखदुःखान्यतरसाक्षात्कारः १४९२

भोग्यम्—सुखदुःखान्यतरसाक्षात्कारिज्ञान-विषयः (सुखादिः) ॥ १४९३ ॥

भोजनम्—काठिनद्रव्यस्य गलबिलाधःसंयोजनम् ॥ १४९४ ॥

भ्रमः—अतस्मिँस्तद्ग्रहः १ दोषजन्यज्ञानम् २ निष्फलप्रवृत्तिजनको बोधो वेति वे० ३ स्व-व्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानमिति चिन्तामणौ ४ तदभाववः-

सि तत्प्रकारकं ज्ञानमिति ग्रं०८ स द्विविधः सोपाधिको निरुपाधिकश्चेति छ० त० [ १४६ पृष्ठे ] द्रष्टव्यम् ॥ १४९९ ॥

भ्रान्तिः—अतात्त्विकान्यथाभावेन वस्त्ववगाहनम् ॥ १५०० ॥

म

मङ्गलम्—अभीष्टार्थसिद्धिः १ अभिप्रेतार्थसिद्धिर्वा *२* समाप्तिप्रतिबन्धकीभूतदुरितविशेषविघातकत्वं मङ्गलत्वम् ३ विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावाभिन्नत्वे सति प्रारिप्सितविघ्नध्वंसासाधारणकारणत्वमिति पु० ४ तच्च आशीर्वादनमस्कारवस्तुनिर्देशभेदात्त्रिविधं ल० तत्तच्छब्दे [६७–१४० पृ०] द्र० ॥ १५०४ ॥

मतम्—सम्मतम् १ अभिप्रेतज्ञानं वा १५०६

मत्सरः—स्वसमानसंपत्तिदर्शनाऽसहनम् १ परोत्कर्षासहनपूर्वकस्वोत्कर्षवाञ्छेति ग्रं.।

मदः—मत्सदृशः को(वेति)ऽस्तीति हर्षबुद्धिः १ विद्यादिनिमित्तात्स्वास्मिन्नाधिक्यबुद्धिरिति ग्रं० ॥ १८१० ॥

मध्यस्थः—विवदमानयोः सदसद्वाक्यविचारकः १ यद्वा, विवदमानयोरपि पक्षपाती हितैषी वा ॥ १८११ ॥

मनः—सङ्कल्पविकल्पात्मवृत्तिमदन्तःकरणम् १ अपञ्चीकृतभूतकार्यत्वे सति ज्ञानकर्मोभयकरणत्वं मनस्त्वमिति वे० २ सुखदुःखादिसाक्षात्कारणत्वे सतीन्द्रियम्। आत्ममनःसंयोगादिवारणायेन्द्रियमिति, चक्षुरादिवारणाय सुखेति ३ स्पर्शरहितत्वे सति क्रियावत्त्वमिति न्यायग्रंथे ४ द्र-

ष्यसमवायिकारणत्वराहित्याणुसमवेतद्रव्य-
त्वापरजातिरिति सर्वद० सं० ९ मननात्
**मननम्**—श्रुतस्यार्थस्योपपत्ति (युक्ति) भि-
श्चिन्तनम् १ द्वितीयाध्यायोक्तार्थासत्त्वश-
ङ्कानिवर्तकयुक्त्यनुसन्धानमित्यद्वैतसिद्धौ २
शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां
तन्निराकरणानुकूलतर्कात्मज्ञानजनको मा-
नसो व्यापार इति वे० परिभाषायाम् ३
अपरे तु बाधकसाधकप्रमाणाभ्यां श्रुति-
तात्पर्यनिर्णयः ४ साधकबाधकप्रमाणो-
पन्यासरूपयुक्तिभिस्तदर्थानुचिन्तनमिति
तर्कमते ॥ १९२३ ॥

**मनुष्यः**—मनोरपत्यम् ॥ १९२४ ॥

**मनोनाशः**—वृत्तिरूपपरिणामत्यागेन निरो-
धाकारपरिणामः ॥ १९२५ ॥

मनोमयः—मनोऽतिरिक्तोपाधिशून्यः १८२६
मनोमयकोशः—कर्मेन्द्रियैः सहितं मनः ॥
मनोव्यसनम्-चौर्यादीच्छाहेतुभूतं व्यसनम्
मन्त्रः—यत्राभियुक्तानां मन्त्रप्रसिद्धिः स इति शास्त्रदीपिकायाम् १ प्रयोगसमवेतार्थस्मारको (कतयार्थवत्त्वम्) वाक्यविशेष इति मी० न्यायप्रकाशे २ स च ऋग्यजुः सामभेदात्रिविधः छ० तत्तच्छब्दे [८६–२१७ पृ०] द्र० ॥ १५३० ॥
मन्त्रभागः—अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशक इति प्रस्थानभेदे मधुसूदनः १ याजिकैः समाम्नातोनुष्ठेयार्थप्रकाशको वेदभागः २ मन्त्रविधानप्रतिपादको वेदभागो वेति सर्ववेदभाष्यकारः २ वेदत्वे सति ब्राह्मणभिन्नमिति स० धर्मोद्धारे ॥१५३४॥

**मन्दवैराग्यम्**-पुत्रदारादिविषयावियोगे धिक्संसारमिति बुद्ध्या विषयाजिहासा इति त्रिवर्णसंन्याससारसंग्रहे ॥ १५३९ ॥

**मरणावस्था**–चरमशरीरप्राणसंयोगध्वंसः १ देहादीनामुपात्तानां परित्यागः २ पूर्वविद्यमानदेहेन्द्रियावियोगो वेति ग्रं० १५३८

**मलमासः**–रविसंक्रान्त्यभावविशिष्टचान्द्रमास इति श्राद्धविवेकटीकायाम् १ स्वाव्यवहितप्राक्क्षणावच्छेदेन रविभुज्यमानराशीयरविसंयोगविशिष्टस्वान्तिमक्षणकत्वम् । भानुलंघितेऽतिव्याप्तिवारणाय औत्पत्तिकभिन्नत्वेन विशेषणीयमिति मलमासतत्त्वटीकायाम् ॥ १५४० ॥

**मर्यादा**–न्यायपथस्थितिः ॥ १५४१ ॥

**मलिनवासना**–ज्ञानप्रतिबन्धकीभूता । सा

त्रिविधा लोकवासना शास्त्रवासना देहवा-
सना चेति ल० तत्तच्छब्दे[१३८पृष्ठे]द्र०।

महत्त्वम्—त्रिविधपरिच्छेदशून्यत्वम् १५४३

महापुरुषः—महान् कामादिभिरक्षुभितमानः स पुरुषः ॥ १५४४ ॥

महाप्रकरणम्—फलभावनायाः प्रकरणम्

महाप्रलयः / महाप्रलयः — सर्वभावकार्यध्वंसः १ जन्यभावानधिकरणकालो वा २ ब्रह्मणो नाशावस्थाऽस्मिन्प्रलयेऽज्ञानमेव-परिशिष्यते, इति मोहनलालः ॥ १५४८ ॥

महाभारतम्—महत्त्वे सति भारत [१९६ पृ०] म् ॥ १५४९ ॥

महामोहः(=रागः)साधनरहितस्यापि सर्व-सुखजातीयं मे भूयादिति विपर्ययविशेषः ॥

महावाक्यम्—तत्त्वं पदार्थैक्यबोधकवाक्य-

मित्यद्वैतमते १ परस्परसंबद्धार्थकम् २ वाक्यसमुदायरूपत्वे सति एकवाक्यं वेति मीमांसकाः ॥ १५५३ ॥

महाविद्याऽनुमानत्वम्–पक्षे प्रकारान्तरेण साध्योपसंहारशालित्वे सति दृष्टान्ते प्रकारान्तरेण साध्योपसंहारशालित्वमिति न्यायमकरन्दटिप्पण्यां बालरामः १५५४

मात्रा–ह्रस्ववर्णोच्चारणकालः *१* ओङ्कारोच्चारणकालः २ स्वजानुमण्डलं पाणिना त्रिःपरामृश्यच्छोटिकावच्छिन्नः कालो वेति यो० ॥ १५५७ ॥

मानः–सर्वत्राप्रणतिभावः १ पुरुषान्तरेण सम्पादितः सत्कारो वा २ अविवेकिनाऽभ्युत्थानाभिवादनपूर्वकत्वे सति कायकपूजात्वं मानत्वम् ॥ १५६० ॥

मानसजपः—जिह्वोष्ठादिव्यापाररहितं श-
ब्दार्थयोश्चिन्तनम् ॥ १५६१ ॥

मानित्वम्—विद्यमानैरविद्यमानैर्वा गुणैरा-
त्मश्लाघित्वम् ॥ १५६२ ॥

माया—हृदयेऽन्यथा कृत्वा बहिरन्यथा व्य-
वहरणम् *१* स्वाश्रयाव्यामोहकरी २ र-
जस्तमोऽनभिभूतशुद्धसत्त्वप्रधाना इति ग्रं०
३ विपरीतप्रवृत्तिहेतुत्वे सति विषयोपादा-
नत्वे सति विक्षेपशक्तिप्रधानत्वमिति पु०४
निरूपयितुमशक्यत्वे सति विस्पष्टं भास-
मानत्वम् । आत्मन्यतिव्याप्तिवारणाय स-
त्यन्तमिति ग्रं० ॥ १५६७ ॥

मित्रम्-स्नेहेनोपकारकः १ उपकारमनपे-
क्ष्योपकर्तृ वा ॥ १५६९ ॥

मिथ्यात्वम्—ज्ञानबाध्यत्वमिति विवरणे

ब्रह्माभिन्नत्वमिति परिमले २ प्रतिपन्नोपाधौ त्रैकालिक (कात्यन्ताभाव) निषेधप्रतियोगित्वम् । असद्व्यावर्तनाय प्रतिपन्नोपाधाविति विशेषणम्, प्रागभावादिप्रतियोगित्वमादायांशतः सिद्धसाधनवारणाय त्रैकालिकेति, इदं लक्षणं चित्सुखीसिद्धान्तलेशाद्वैतसिद्ध्यादिषु दृष्टम् ३ ज्ञानातिरिक्तानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वम् ४ यद्वा, ज्ञानाघटितसामग्र्यानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वम् । घटं नाशयामीति ज्ञानपूर्वकं मुद्गरपातादिना तन्नाशदर्शनात् तद्वारणाय सत्यन्तम्, आत्मन्यतिव्याप्तिवारणाय विशेष्यमिति ग्रं० ६

१ ज्ञानाघटिता तदसम्बद्धा या सामग्री तदनिवर्त्यत्वे सतीत्यर्थः ।

स्वाऽनधिकरणाऽनधिकरणात्यन्ताभाव-
प्रतियोगित्वमिति वे० तत्त्वविवेके नृसिंहा-
श्रमाचार्यः ६ सद्विलक्षणत्वे सत्यपरोक्षप्र-
तीतिविषयत्वम् ७ असत्त्वाविशेषेऽपि क-
दाचित्प्रतीयमानत्वं वा गगनकमलादाव-
तिव्याप्तिवारणाय कदाचिदिति वे० मु-
क्तावल्याम् ८ स्वाश्रयत्वेनाभिमतयावन्नि-
ष्ठात्यन्ताभावप्रतियोगित्वम् । अभिमत
पदमसम्भववारणाय, यावत्पदमर्थान्त-
रवारणायेति वे० परिभाषायाम् ९ एका
वच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्य-
न्ताभावप्रतियोगित्वमित्यद्वैतकौस्तुभे १०
पारमार्थिकत्वावच्छिन्नप्रतियोगिताकस्वा-
त्यन्ताभावसामानाधिकरण्यमिति चूडा-
मणौ ११ अयं प्रपञ्चो मिथ्यैव सत्यं-

ब्रह्माहमद्वयम्, अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ॥ १५८० ॥

मिश्रितकर्ममध्यमम्—स्वाश्रमोचितकाम्यकर्मानुष्ठानादियोग्यशरीरप्रापकम् ॥

मिश्रितकर्मसामान्यम्—चाण्डालव्याधाद्यधमशरीरप्रापकम् ॥ १५८२ ॥

मिश्रितकर्मोत्कृष्टम्-निष्कामकर्मानुष्ठानादियोग्यशरीरप्रापकम् ॥ १५८३ ॥

मीमांसा—विचारपूर्वकतत्त्वनिर्णयः ※१※ वेदार्थकर्मनिर्णायको ग्रन्थः ※२※ वेदवाक्यविचारः ३ कर्मब्रह्मविषयसंशयानिवारको ग्रन्थो वा ॥ १५८७ ॥

मुक्तत्वम्—पुनः संसाराभाववत्त्वम् १ अविद्याकामकर्मपारतन्त्र्यराहितत्वं वा १५८९

मुख्यप्रयोजनत्वम्—अन्येच्छाऽनधीने-

च्छाविषयत्वमिति मुक्तिवादे ॥१५९०॥

मुख्यसामानाधिकरण्यम्—अज्ञानोपहितस्य जीवस्याऽबाधेन ब्रह्मणा सामानाधिकरण्यम् ॥ १५९१ ॥

मुदिता—पुण्येष्वभ्युत्थासनादिभिः सत्कारः॥

मुनित्वम्—मननशीलत्वम् १ वेदार्थमननशीलत्वं वा २ निरन्तराद्वितीयार्थमननशीलत्वमिति म० ३ दुःखपङ्कमग्नजगदुद्धीर्षुत्वम्, यथा शौनकादिरितिग्रं० १५९५

मुमुक्षा—हे धातः संसारबन्धनान्मम मोचनं कदा भविष्यतीतीच्छा ॥ १५९६ ॥

मुमुक्षुः—स्वात्मानं द्वैतबन्धान्मोक्तुमिच्छुः १ मोक्षेच्छावत्त्वं मुमुक्षुत्वम् ॥ १५९८ ॥

मूढः—कर्तृत्वाद्यहङ्कारभावारूढः ॥१५९९॥

मूढावस्था—निद्रातन्द्रादिग्रस्तावस्था ॥

मूर्ख(पशु)त्वम्—हिताहितज्ञानशून्यत्वम्
* १ * लोकवेदविरुद्धाचरणावलम्बित्वम्॥
मूर्च्छावस्था—मुद्गरादिप्रहरणानन्तरं विशेषाविज्ञानोपरमावस्था ॥ १६०३ ॥
मूर्तत्वम्—क्रियाश्रयत्वम् १ क्रियावद्द्रव्यत्वं वा २ परिच्छिन्नपरिमाणवद्द्रव्यत्वमिति ग्रं० ॥ १६०६ ॥
मृत्युः—विजातीयात्ममनःसंयोगनाशः ॥
मेधा—अनेकश्रुतग्रन्थार्थधारणशक्तिः १६०८
मेधावी—गुरूपदिष्टपदार्थग्रहणधारणपटुः ॥
मैत्री—परानुद्वेगजनिका वृत्तिः १ सुखिष्वात्मीयत्वभावनमिया० ॥१६११ ॥
मोक्षः } उत्तराधरभावेन निरन्तरोत्पादक्ले-
मुक्तिः } शादिदोषदूषितबोधसन्ततिविच्छेद
इति माध्यमिकमते १,पुनर्भावनाप्रकर्षपरिल

ऽत्यपरिशुद्धचित्तसन्तानमिति योगाचारमते २ प्रलीननिखिलोपाधेः क्षेत्रज्ञस्य सततोर्द्ध्वगतिरिति जैनमते ३ अक्षयशरीरादिलाभ इति वैष्णवकापालिकयोर्मते ४ आत्यन्तिकैकविंशतिदुःखध्वंसः ५ स्वसमानाधिकरणदुःख(दुरित) प्रागभावासमानकालीनदुःख(दुरित) ध्वंसो वा। संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं दुःखविशेषणम्, अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय स्वसमानाधिकरणेति दुःखविशेषणमिति तार्किकमते ७प्रकृतिपुरुषविवेकदर्शनात्तदाविवेकनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानमिति सांख्ययोगमते ८ निखिलदुःखनिवृत्तिपुरस्सरं स्वात्मानन्दा-

वाप्तिः ९ विद्यानिरस्ताविद्यातत्कार्यत्व(ब्रह्म-भावापत्तिः) स्वात्मनावस्थानं वा १० तस्य वस्तुत एकत्वेपि दुःखानन्दरूपप्रतियोगिद्वैविध्याद्द्वैविध्यमुक्तम् । यद्वा, जीवन्मुक्तिर्विदेहमुक्तिश्चेति भेदान्मुक्तिर्द्विविधेति वेदान्तिमते ॥ १६२१ ॥

मोहः—हितेष्वहितबुद्धिरहितेषु हितबुद्धिः १ सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य निवृत्तिः ॥ १६२२ ॥

मौनम्—वाग्व्यापाररहितत्वम् १ वाक्संयमः २ वाक्संयमहेतुर्मनः संयमो वेतिम० ३ वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते, प्रपञ्चो यदि वक्तव्यः सोपि शब्दविवर्जितः । इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम्, गिरां मौनं तु बालानामयुक्तं ब्रह्मवादि-

नाम् । तच्चाकारमौनकाष्ठमौनभेदेन द्विविधम् । अवचनमात्रमाकारमौनम्[९८पृ०]॥
म्लेच्छः—गोमांसखादको यस्तु विरुद्धं बहु भाषते, सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयत इति बौद्धायनः ॥ १६२६ ॥

य

यजुः—अनियताक्षरपादावसानम् १ वृत्तगीतिवर्जितत्वे सति प्रश्लिष्टपठित(१९७५) मन्त्रो वा यथाऽग्नीदग्नीन्विहर इत्यादिरिति न्यायमालायाम् ॥ १६२८ ॥
यजुर्वेदः—यजुर्बहुलो वेदः १ यजुरवयवको वेदो वा २ यजुर्विनियोजको वेदो वा ३ यजुर्द्व्यको वेदो वेति न्यायसुधायाम् ॥
यज्ञः—देवतोद्देशेन हविस्त्याग इति निरुक्ते १ यूपसम्बन्धराहितत्वे सति शास्त्रविहितकर्म-

विशेषः २ स द्विविधः श्रौतः स्मार्त्तश्चेति । तत्र श्रौतोऽग्निहोत्रादिः, स्मार्तः पञ्चयज्ञादिः ॥ १६३४ ॥

यतमानवैराग्यम्—अस्मिन्संसारे इदं सारमिदमसारमिति सारासारविवेकः १६३५

यतिचान्द्रायणम्—एकमासं प्रत्यहं मध्यानकालेऽष्टाष्टपिण्डाशनम् ॥ १६३६ ॥

यथार्थज्ञानम्—अदुष्टसामग्रीजन्यं ज्ञानम्॥

यथार्थनिश्चयः—अविसंवादिज्ञानम् १६३८

यथार्थानुभवः—फलवत्प्रवृत्तिजननयोग्यम्, यथा रजते इदं रजतमिति ज्ञानम्॥१६३९॥

यथेष्टाचरणम्—स्वेच्छयानिषिद्धविषयभोक्तृत्वम् १ शास्त्रमर्यादोल्लङ्घकत्वं वा ॥

यमः—अहिंसादिपरिग्रहः १ मनोमात्रसाध्यत्वे सति निवृत्तिलक्षणयोगाङ्गविशेष

इति ग्रं० २ अहिंसाद्यन्यतमत्वम् ३ हिं
सादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयति
निवर्तयतीति । यमफलानि सकामानां यो-
गशास्त्रे कथितानि तथाहि—अहिंसाप्रति-
ष्ठायां तत्संनिधौ वैरत्यागः, क्रियाफला-
श्रयत्वम्, सर्वरत्नोपस्थानम्, वीर्यला-
भः, जन्मकथन्तासम्बोधः ॥ १६४४ ॥
यागः—मन्त्रकरणकः १ वह्न्याद्यधिकरणं
वा २ देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्य-
विशेष्यकेच्छावत्त्वमिति दिनकर्याम् ३ स-
यूपत्वे सत्यन्त्याहुतित्वम् । अग्निहोत्रवा-
रणाय सयूपेति,देवगृहस्थण्डिलविशेषयो-
र्वारणायान्त्याहुतीति ग्रं० ॥ १६४८ ॥

---

१ देवतोद्देश्यकत्वम्—देवतास्वत्ववद्वि-
शेष्यकत्वम् ।

युक्तिः—अर्थावधारणम् १ स्वपक्षसाधकवि-
पक्षबाधकप्रमाणोपन्यासो वा ॥१६५०॥

युक्तयोगी—सर्वदा(पदार्थज्ञानमा)समाधि-
मान्योगी ॥ १६५१ ॥

युञ्जानयोगी—कादाचित्कसमाधिमान्योगी॥

युद्धम्—परस्पराभिघातार्थं शस्त्रादिक्षेपण-
व्यापारः ॥ १६५३ ॥

योगत्वम्—अलब्धलाभत्वम् *१* कामा-
दिरूपचित्तवृत्तिनिरोधत्वम् १ यद्वा, स्वरू-
पावस्थितिहेतुचि०२ दैवासुरवृत्तीनां नि-
रोधत्वमित्यद्वैतकौस्तुभे २ क्लेशकर्मादिप-
रिपन्थित्वे सति चित्तवृत्तिनिरोधत्वमिति
विज्ञानभिक्षुः४ क्लेशकर्मविघटकत्वे स० त्व-
म्। क्षिप्तमूढादिषु माभूद्योगत्वमिति सत्य-

---

१ प्रमाणविपर्ययविकल्पनिद्रास्मृत्यादि ।

न्तनिवेशस्तथा च तत्र वृत्तिनिरोधसत्त्वेपि क्लेशकर्माद्यविघटकत्वात्तस्य न तेषु योगत्वम्, विवेकख्यातावपि तद्विघटकत्वात्तद्वारणाय निरोधान्तमिति योगमञ्जर्याम्॥

योगरूढिः—योगार्थवृत्तिरूढिः, यथा पङ्कजादिपदा (देषु) नाम् ॥ १६५९ ॥

योगशक्तिः—अवयवशक्तिः, यथा पाचकादिपदा (देषु) नाम् ॥ १६६० ॥

योग्यत्वम्—अन्यतरोपस्थितावन्यतरस्याबाधितत्वम् ॥ १६६१ ॥

योग्यता—बाधकप्रमाणाभावः *१* वाक्यार्थाबाधः २ तात्पर्यविषयसंसर्गाऽबाधो वा ३ एकपदार्थेपरपदार्थसम्बन्ध इति न्यायग्रन्थे ॥ १६६५ ॥

योग्यानुपलब्धिः—अभावप्रतियोगिसत्त्व-

प्रसञ्जनप्रसञ्जितोपलब्धिरूपप्रतियोगिका-
नुपलब्धिः, यथा भूतले घटो नास्तीति प्र-
तीतिसिद्धघटाभावप्रतियोगिनो घटस्य य-
द्यत्र घटः स्यादितिप्रसञ्जनेन ( आपाद-
नेन ) तर्ह्युपलभ्येतेति प्रसञ्जितोपल-
ब्धिरूपप्रतियोगिका घटस्यानुपलब्धि-
स्तया भूतले घटाभावप्रमा जायते इत्य-
द्वैतग्रन्थे १ अत्र यदि प्रतियोगि स्यात्तदो-
पलभ्येत इत्याकारकतर्कसहकृतप्रतियो-
ग्युपलम्भाभाव इति न्या० ॥ १६६७॥

**योनिजशरीरम्**—शुक्रशोणितयोः परस्प-
रमेलनजन्यं शरीरम् १ तद्द्विविधम्—जरा-
युजमण्डजञ्चेति ॥ १६६८ ॥

**यौक्तिको बाधः**—मृद्व्यतिरेकेण घटाभावनि-
श्चयवन्निखिलकारणीभूतब्रह्मव्यतिरेकेण

प्रपञ्चाभावनिश्चयः ॥ १६६९ ॥

यौगिकः—प्रकृतिप्रत्ययद्वारार्थवाचकः शब्दः १ अवयवशक्त्यर्थशक्तिद्वारावबोधकः शब्दो वा यथा प्रियः सुखद इत्यादिः ॥

यौगिकरूढिः—योगार्थभिन्नार्थवृत्तिरूढिः, यथोद्भिदादिपदम् ॥ १६७२ ॥

र

रजस्त्वम्—प्रेरकत्वे सति सक्रियत्वे सति दुःखहेतुत्वम् ॥ १६७३ ॥

रतिः—बाह्यसाधननिरपेक्षा ॥ १६७४ ॥

रसः—रसनेन्द्रियमात्रग्राह्यो गुणः ॥१६७५॥

रसनम्—रसोपलब्धिसाधनमिन्द्रियम् । रसनेन्द्रियरससंबन्धादावतिव्याप्तिनिरासायेन्द्रियमिति ॥ १६७६ ॥

रसास्वादः—विक्षेपनिवृत्तिजन्यानन्दानुभ-

व:१समाध्यारम्भसमये ब्रह्मानन्दानवाप्तौ स्थूलवृत्त्यभावानन्दास्वाद इति ग्रं०१६७८

रागः—उत्कटेच्छा १ स्त्र्यादिष्विष्टसाधनताबुद्ध्या स्नेहो वा २ प्राप्तविषयक्षयकारणे सत्यपि न क्षीयतामित्येवमाकारश्चित्तवृत्तिविशेष इति ग्रं० ॥ १६८१ ॥

रामायणम्-रामचरितमधिकृत्य कृतो ग्रन्थः

रूढः—प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधकः शब्दः, यथा गोवृक्षादिः ।

रूढिः—समुदायशक्तिः, यथा घटादिपदा(दे-षु) नाम् ॥ १६८४ ॥

रूपम—चक्षुर्मात्रग्राह्यो गुणः । संख्यादिवारणाय मात्रपदम् ॥ १६८५ ॥

रेचकप्राणायामः—पीतस्य वायोर्द्वात्रिंशन्मात्राभिस्त्यागः ॥ १६८६ ॥

रोगः—धातुवैषम्यहेतुको व्याधिः ॥१६८७॥

ल

लक्षकः—लक्षणयाऽर्थबोधकः शब्दः १ तीरादिसंबन्ध्यनुभावको वा ॥ १६९० ॥

लक्षणम्—असाधारणधर्मः १ असाधारणधर्मप्रतिपादकं वाक्यमिति ग्रं० २ समानासमानजातीयव्यवच्छेदकत्वमिति सांख्यग्रन्थे ३ अव्याप्त्यतिव्याप्त्यसम्भवदोषत्रयशून्यत्वम्, यथा गोः सास्नादिमत्त्वमिति न्यायग्रन्थे ४ सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धाकार इति माधवीयन्यायमालायाम् ५ लक्ष्यतावच्छेदकसमनियतत्वम् । लक्ष्यतावच्छेदकसमनियतत्वं नाम लक्ष्यतावच्छेदकेन सह समव्याप्तिकत्वम्, यथाऽन्तःक-

रणावच्छिन्नं चैतन्यं प्रमातृचैतन्यमिति प्रमातृलक्षणे यत्र यत्रान्तःकरणावाच्छिन्नचैतन्यत्वं तत्र तत्र प्रमातृत्वं यत्र यत्र च प्रमातृत्वं तत्र तत्रान्तःकरणावच्छिन्नचैतन्यत्वमिति लक्ष्यतावच्छेदकेन प्रमातृत्वेन सह लक्षणस्य समव्याप्तिरिति वे० ग्रन्थे १६९६

लक्षणप्रयोजनम्—व्यावृत्तिर्व्यवहारो वा

लक्षणा—श(बोध्य)क्यसम्बन्धः १स्वशक्तिज्ञाप्यसंबन्ध इति ग्रं० २ सा द्विविधा केवललक्षणा लक्षितलक्षणा चेति ल० तत्तच्छब्दे [९९ पृष्ठे] द्रष्टव्यम् ॥ १६९८ ॥

लक्षितः—लक्षणया बोधितार्थः ॥१६९९॥

लक्षितलक्षणा—शक्यपरम्परासंबन्धः, यथा द्विरेफो रौतीति वाक्ये द्विरेफस्य भ्रमरपदे सम्बन्धस्तस्य च मधुकरे १ शक्यपरम्परा-

संबन्धेनार्थान्तरप्रतीतिरिति पु०॥ १७०१॥

लक्ष्यम्—वक्तृतात्पर्यविषयत्वे सति शक्य-
सम्बद्धम् १ लक्षितुं योग्यम् ॥ १७०३ ॥

लज्जा—अकृत्यप्रवृत्तिः १ कालविशेषदेशवि-
शेषावच्छेद्यजनविशेषसन्निधानप्रयोज्य का-
र्यविशेषगता कर्तव्यत्वबुद्धिरिति ग्रं० १७०५

लयः—अखण्डवस्त्वनालम्बनेन चित्तवृत्तेर्नि-
द्रा *१* उपादानकारणविद्यमाने सति
कार्यतिरोधानमात्रम् ॥ १७०७ ॥

लाक्षणिकः—लक्षणयाऽर्थबोधकः शब्दः ।

लाघवत्वम्—लघोर्भावत्वम् ॥ १७०९ ॥

लिङ्गम्—व्याप्त्याश्रयः १ व्याप्तिविशिष्टप-
क्षधर्मताविशिष्टहेतुर्वेति न्या० २ शब्दसा-
मर्थ्यम् । सामर्थ्यं लिङ्गमित्युक्तेऽङ्कुरादि-
जननानुकूलबीजादिसामर्थ्ये तत्प्रसङ्गः स्या-

चद्दारणाय शब्देति विशेषणम् ३ अर्थप्रकाशसामर्थ्यमिति मीमांसकाः ४ प्राकृतगुणगतावस्थात्मको धर्म इति वैयाकरणाः ५ पुंसोऽसाधारणचिह्नः॥१७१६॥

लिङर्थत्वम्—कार्यबुद्धिगोचरत्वे सति प्रवर्तकत्वमिति तत्त्वदीपने ॥ १७१७ ॥

लेखकः—शीर्षोपेतान् सुसंपूर्णान् समश्रेणिगतान् समान्, अक्षरान् (वर्णान् हि) विलिखेद्यस्तु स लेखक इति स्मृतः १७१८

लेशाऽविद्या—प्रारब्धक(कार्य)र्मसंपादनपटीयानविद्याया अवस्थाविशेषः १ क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पोऽविद्यासंस्कारो वा २ प्रारब्धकार्यवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशो वा ॥

लोकः—प्राणिनां कर्मज्ञानफलभोगस्थानविशेषः

लोकवासना—सर्वे जना यथा मां न निन्द-
न्ति यथा वा स्तुवन्ति तथैव सर्वदाचरि-
ष्यामीत्यशक्यार्थाभिनिवेशः १ लोकानु-
भवजनितत्वे सति लोकस्यैव पुनः पुनः
(रञ्जनाद्यर्थम्) स्मरणहेतुरित्यादर्शो २ स-
म्पादयितुमशक्यत्वात्पुरुषार्थानुपयोगित्वा-
च्च लोकवासनामलिना ॥ १७२४ ॥

लोकसंग्रहः—स्वयं सदाचारप्रवृत्तत्वे सति
लोकानां सदाचारप्रवर्तकः ॥ १७२५ ॥

लोभः—स्वद्रव्यापरित्यागे सति परद्रव्यजि-
घृक्षुत्वम् । अस्तेयेनापरिग्रहेण सन्तोषेण
दानेन लोभस्य निवृत्तिः ॥ १७२६ ॥

लौकिकगुणाधानवासना—समीचीनश-
ब्दादिविषयसम्पादनम् ॥ १७२७ ॥

लौकिकदोषापनयनवासना—चिकित्स-

क्योक्तैरौषधै (र्मुखादिप्रक्षालनम्) र्व्याध्या-
द्यपनयनम् ॥ १७२८ ॥

लौकिकशाब्दीप्रमा-आप्तवाक्यजन्या प्रमा

व

वक्तृतात्पर्यम्—पुरुषाभिप्रायः । तज्ज्ञानं
वाक्यार्थज्ञाने न कारणम्, तदभावेऽप्य-
व्युत्पन्नवाक्याद्वाक्यार्थज्ञानदर्शनात् १. त-
दर्थप्रतीतीच्छयोच्चारितत्वमिति केचित् ॥

वञ्चन(कः)म्—स्वार्थसिद्धिव्याजेन वशीक-
रणम् १ अन्यथास्थितस्य वस्तुनोऽन्यथा-
रूपेण कथ(था दि)नादिनाऽन्यमोहोत्पादन-
(कः)मिति बृहदभिधाने ॥ १७३४ ॥

वर्तमानकालः—सूर्यपरिस्पन्दादिक्रियाव-
च्छिन्नः काल इति वे० ग्रन्थे १ स्वध्वंस-

---

१ अव्युत्पन्नत्वम्—पदज्ञानरहितत्वम् ।

प्रागभावानधिकरणकालवृत्तित्वं वर्तमानत्वमिति न्यायग्रन्थे २ शब्दप्रयोगाधाराऽऽरब्धापरिसमाप्तकालः ३ क्रियायाः प्रारम्भतः समाप्तिपर्यन्तं प्रारम्भसमाप्त्यभिव्याप्यवृत्तिमान्कालो वेति वैया०॥१७३८

वर्तमानप्रतिबन्धः-वर्तमानकालीनत्वे सति तत्त्वज्ञानप्रतिरोधः। स च विषयासक्तिप्रज्ञामान्द्यकुतर्क[1]विपर्यय[2]दुराग्रहभेदाच्चतुर्विधः।

वशीकारवैराग्यम्-ऐहिकामुष्मिकाविषयजिहासा ॥ १७४० ॥

वस्तुनिर्देशमङ्गलम्-स्वेष्टतमदेवतागुणग-

---

१ कुतर्कः-प्रतिपादितस्यार्थस्य विपरीतग्रहणम्।

२ विपर्ययः-अहं श्रोत्रियः पण्डितोहं विरक्तोहमिति देहेन्द्रियादावात्मत्वबुद्धिः।

णोक्तिः ॥ १७४१ ॥

वस्तुपरिच्छेदः–अन्योन्याभावप्रतियोगित्वम् १ यत्किञ्चिद्वस्त्वनात्मत्वमिति ग्रं० ।

वहिरङ्गम्–बहिःप्रकृतेर्बाह्यमङ्गं यस्य १७४४

व(ब)हिर्मुखम्–बहिः बाह्यविषये मुखं प्रवणता यस्य ॥ १७४५ ॥

वाक्–वचनक्रियासाधनमिन्द्रियम्॥१७४६॥

वाक्यम्–पदसमू(मुदायः)हः । घटादिसमूहवारणाय पदेति १ आकाङ्क्षायोग्यतासंनिधिमत्पदसमुदायः । विलम्बोच्चारितपदसमुदायेतिव्याप्तिवारणाय सन्निधीति, अग्निना सिंचेदिति वाक्येतिव्याप्तिव्यावृत्त्यर्थं योग्येति, गौरश्वः पुरुषो हस्तीत्यत्रातिव्याप्तिवारणायाकाङ्क्षेत्युक्तौ० २ शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं पदात्मकमिति

चित्सु० ३ समभिव्याहार इति मी० ४ स्वार्थत्रोधसमाप्त इति वैया० ॥ १७८१ ॥

वाक्यैकवाक्यत्वम्-प्रत्येकं भिन्नाभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वमिति वे० परि० १ अङ्गबोधकवाक्यस्याङ्गिबोधकवाक्येन सहैकवाक्यत्वमिति ग्रं० ॥ १७८२ ॥

वाचकत्वम्-पुराणादिपाठकत्वम् *१* पदार्थस्मृतिजनकत्वम् २ पदार्थविषयप्रतीतिविषयत्वमिति प० ॥ १७८६ ॥

वाच्यत्वम्-पदजन्यप्रतीतिविषयत्वम् ॥

वाञ्छा-इष्टसाधनताधीजन्याभीष्टविषय-

---

१ समभिव्याहारः-साध्यत्वादिवाचकद्वितीयाद्यघटितत्वे सति तात्पर्यलब्धशेषशेषिभावबोधकपदयोः सहोच्चारणम् ।

चित्तवृत्तिः ॥ १७५८ ॥

वादः—तत्त्वबुभुत्सोः (त्मुना सह) कथा १ तत्त्वनिर्णयफलः कथाविशेष इति ग्रं० ॥

वादित्वम्—विचारस्थले वादकथाकर्तृत्वम् १ प्रथमपक्षप्रतिपादकत्वं वा ॥ १७६२ ॥

वानप्रस्थाश्रमः—गृहस्थाश्रममपहाय गृहीतमुनिवृत्तिरसंन्यस्तः । स च वैखानसौदुम्बरवालखिल्यफेनपभेदाच्चतुर्विधः२९४ पृ०

वायुः—शब्दस्पर्शगुणकः *१* रूपरहितत्वे सति स्पर्शवानिति नै० ॥ १७६५ ॥

वार्तिकम्—उक्तानुक्तदुरुक्तार्थव्यक्तकारि १ उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते, तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः

वासना—अनुभवजन्या स्मृतेर्हेतुः १ पूर्वापरपरामर्शं विना सहसोत्पद्यमानस्य क्रो-

धादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कार-
विशेष इति ग्र० २ सुषुप्त्यवस्थागता धीसू-
क्ष्मावस्था इति पु० ३ स्वस्वदेशाचारकुल-
धर्मभाषास्वभावभेदतद्गतापशब्दसुशब्दादि-
षु प्राणिनामभिनिवेशः सामान्येनोदाहण-
म् । सा द्विधा-अशुभा शुभा चेति ल० त-
त्त्वछन्दे [५२ पृष्ठ] द्र० ॥ १७७० ॥

वासनाक्षयः-विवेकजन्यचित्तप्रशमवासना-
दार्ढ्येन बाह्यनिमित्ते सत्यपि क्रोधाद्यनु-
त्पत्तिः ॥ १७७१ ॥

वासनानन्दः-ब्रह्मध्यानादेर्व्युत्थितस्य या
आनन्दस्य वासना ॥ १७७२ ॥

१विकल्पः-शब्दज्ञानानुपाती वस्तुशून्यः १

१ आदिपदेन विषयध्यानस्य सुषुप्तेश्च प-
रिग्रहः ।

वस्तुशून्यत्वे सति स्वाविरोध्युत्तरज्ञानाबाध्य-
त्वमिति योगमञ्जर्याम् ॥ १७७४ ॥

विकारः—जन्यत्वे सत्यजनक इति सां० १ पू-
र्वावस्थापरित्यागे सत्यवस्थान्तरापत्तिरि-
ति वे० मते ॥ १७७६ ॥

विकृतिः—तत्त्वानारम्भकम् १ जन्यत्वे सति
जनको वेति सां० २ यत्र न समग्राङ्गोप-
देशः ३ आतिदेशिकेतिकर्त्तव्यताकत्वं वि-
कृतित्वमिति मी० ॥ १७८० ॥

विक्षेपः—कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः
*१* पुनः पुनर्विषयानुसन्धानम् *२* अ-
खण्डवस्त्वनालम्बनेन चित्तवृत्तेरन्यालम्बनम्

विक्षेपशक्तिः—आकाशादिविविधकार्यज-
ननानुकूलमज्ञानसामर्थ्यम् ॥ १७८४ ॥

विग्रहः-स(वृत्त्यर्था)मासार्थावबोधकं वाक्यम् १

समासादिवृत्तिसमानार्थकवाक्यमिति ग्रं० ।

विघ्नत्वम्—कार्योत्पादप्रयोजकीभूतधर्मविघटकत्वम् ॥ १७८७ ॥

विचारः—प्रमाणेन तत्त्वपरीक्षा १ तात्पर्यनिर्णयानुकूलयुक्त्यनुसन्धानं वा ॥१७८९॥

विच्छेदः—एकजातीयद्रव्यगुणादीनामन्यजातीयेन व्यवधानम् ॥ १७९० ॥

विजातीयभेदः—विरुद्धजातिकृतो भेदः, यथा वृक्षस्य शिलादितः ॥ १७९१ ॥

विज्ञानमयकोशः—ज्ञानेन्द्रियैः सहिता बुद्धिः

वितण्डा—स्वपक्षस्थापनहीनः (ना विजिगीषुकथा) कथाविशेषः १ स्व० नराहित्येन परपक्षनिराकरणवाक्यं वा ॥ १७९४ ॥

विदेहमुक्तिः—तत्त्वज्ञानिनो भोगेन प्रारब्धकर्मक्षये वर्तमानशरीरपातः १ भाविशरी-

राऽनारम्भो वा ॥ १७९९ ॥

विद्या—पुरुषार्थसाधनम् *१* जीवब्रह्मणो-रभेदगोचरान्तःकरणवृत्तिः २ अध्यस्त-निषेधकत्वे सत्याधिष्ठानस्वरूपनिर्धारणं वा

विद्यामदः—मत्सदृशः को वेति अहं पण्डितो न मत्तोऽन्यःपण्डितोस्तीति मनसोऽभिनिवेशः

विद्यामदनिवृत्त्युपायः—अहंकः माम(मत्तो) प्यधिकः कश्चित्पण्डितः पराभविष्यतीति निरन्तरश्चिन्तनम् ॥ १८०१ ॥

विद्वत्संन्यासः—गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नसाक्षात्कारेण गृहस्थादिना चित्तविश्रान्तिलक्षणां जीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासः १ अपरोक्षतत्त्वविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्याग इति जी० वि० टीकायाम् ॥ १८०२ ॥

विधिः—पुरुषप्रवर्त्तकं वाक्यम् १ इष्टसाधन-
ताबोधक (वाक्यम् २) प्रत्ययसमभिव्याहृत-
वाक्यमिति ग्रं० ३ अज्ञातार्थज्ञापको वेदभा-
ग इति म० ४ अप्राप्तप्रापको विधिरिति वै-
दिकाः ५ शब्दभावना विधिरिति भाट्टाः
६ नियोगो विधिरिति प्राभाकाराः इष्ट-
साधनता विधिरिति तार्किकादयः ७ स
द्विविधः—अभिधानोऽभिधेयश्च । आद्य-
स्त्वप्यधिकारविनियोगप्रयोगभेदाच्चतुर्विधः।
अपूर्वविधिनियमविधिपरिसंख्याविधिभेदा-
द्विधिः त्रिविध इति वे०ग्रन्थे एषां लक्षणा-
नि तत्तच्छब्दे [१६–४१–३७–७४–१४९
१६०–१८०–२४०] द्र० ॥ १८१० ॥

विनिगमनाविरहः } एकतरपक्षपातियुक्तिवि-
अविनिगम्यत्वम् } रहः (त्वम्) ॥ १८११ ॥

विनियोगविधिः—अङ्गप्रधानसंबन्धबोधको विधिः, यथा दध्ना जुहोतीति ॥१८१२॥

विपरीतभावना—अतस्मिँस्तद्बुद्धिः, यथा देहे आत्मत्वबुद्धि । सा द्विधा प्रमाणगता प्रमेयगता चेति ल० तत्तच्छब्दे [ १७८–१७९ पृ० ] द्रष्टव्यम् ॥ १८१३ ॥

विपर्ययः—बोध्यमानं ज्ञानम् । अतस्मिंस्तत्प्रत्यय इत्युद्योतकाचार्यः ॥ १८१६ ॥

विप्रतिपत्तिः—संशयजनकवाक्यम् । परस्परविरुद्धा(द्धकोटिद्वयप्र)र्थप्रतिपादकं (कं वाक्यम्)वादिवचनं वा ॥ १८१७ ॥

विप्रलिप्सा—अन्यथा प्रतीतस्यार्थस्यान्यथाप्रतिपिपादयिषा प्रतारणा सा॥१८१८॥

विभागः—परस्परासङ्कीर्णव्याप्यधर्मकथनम् । सामान्यधर्मव्याप्यधर्मान्यतरकथनं वा

*२* संयोगनाशको गुणः३ संयोगसमानाश्रयत्वे सति संयोगनाशक इति मानमनोहरकारः ४ जन्यद्रव्यवृत्तित्वे सति स्वसमानाधिकरणाभावप्रतियोगिसंयोगाभिन्नगुण इति ग्रं० ॥ १८२३ ॥

विभुत्वम्-परममहत्त्वम् १ सर्वदेशवृत्तित्वं वेति वे० ग्रन्थे २ सर्वमूर्त्तद्रव्यसंयोगित्वमिति न्यायग्रन्थे ॥ १८२६ ॥

विरक्तः-अननुरक्तः १ विषयवासनाराहित्यं वा २ स्वस्वरूपातिरिक्तरतिरहितत्वं विरक्तत्वम् ३ लौकिकवैदिककर्मरागशून्यत्वे सति स्वस्वरूपज्ञानवत्त्वमिति पु० ॥

विरागः-इहामु ( त्रफलभोगोपेक्षाबुद्धिः ) त्रार्थभोगेष्वरुचिः ॥ १८३१ ॥

विराट् } पञ्चीकृतभूतकार्यसमष्टिस्थूलश-
वैश्वानरः } रीरः १ समष्टिस्थूलसूक्ष्मकारण शरीरोपहितं चैतन्यमिति ग्रं० ॥१८३३॥

विरुद्धत्वम्—एकाधिकरणावृत्तित्वम् ॥

विरोधः—एकावच्छेदेनैकाधिकरणकत्वाभावः १ सहानवस्थानयोरेकदेशे समावेशो वा

विवरणम्-व्याख्यानग्रन्थव्याख्यानम् *१* तत्समानार्थकपदान्तरेण तदर्थकथनम् २ समानार्थबोधकपदान्तरेण तदर्थकथनमिति पु.

विवर्तः—पूर्वावस्थाऽपरित्यागेनावस्थान्तरापत्तिः १ पूर्वरूपापरित्यागेनासत्यनानाकारप्रतिभास इति ग्रं० २ उपादानविषमसत्ताकत्वे सत्यन्यथाभावः । उपादानत्वाभिमतमृद्वस्तुसत्ताविषमसत्ताकत्वं चैतन्यस्याप्यस्तीति तस्य मृद्वस्तुविवर्तत्व-

वारणाय विशेष्यम्, परिणामवारणाय सत्यन्तमिति त्रिविधसत्तावादे ३ एकसत्त्वपक्षे तु उपादानविलक्षणत्वे सत्यन्यथाभावः। उपादानत्वाभिमतजडविलक्षणे चैतन्ये जडविवर्तत्ववारणाय विशेष्यम्, मृत्परिणामे घटादौ मृद्विवर्तत्ववारणाय सत्यन्तम् ४ उपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति कार्यम्। अविद्यायामतिव्याप्तिवारणाय विशेष्यम्, आरम्भवादे उपादानादभेदेन दुर्निरूपकार्येऽतिव्याप्तिवारणाय भेदेत्युक्तम्, परिणामवादे उपादानाद्भेदेन दुर्निरूपकार्येऽतिव्याप्तिवारणायाभेदेनेत्युक्तम्, सिद्धान्ते कार्यकारणयोरभेदोपगमादसम्भववारणाय वस्तुत

इत्युक्तमस्मिँल्लक्षणे कार्यत्वमविवक्षितम्, अनाद्यविद्यादेरपि विवर्तत्वाङ्गीकारादिति वे०सि०लेशटीकायाम् ॥ १८४४ ॥

**विवर्तवादः**–अधिष्ठानस्वरूपमपरित्यज्य-दोषवशाद्रूपान्तरेण कथनम् ॥ १८४५ ॥

**विवादः**–विरुद्धो वादः ॥ १८४६ ॥

**विविदिषा**–सद्यः स्वतत्त्वसाक्षात्कारकरणैकपरायणत्वं जनयन्त्वचित्तवृत्तिः । मुमुक्षोरष्टाङ्गयोगैकतत्परत्वं जनयन्त्यां वृत्तौ व्यभिचारवारणाय सद्य इति पदम्, साक्षात्कारतदिच्छयोः क्रमाद्बोधयितुं स्वपदद्वयम्, अद्वैतब्रह्मेतरवस्तुप्रत्यक्षहेतुताऽऽवृत्तावतिव्याप्त्यभावार्थं तत्त्वेति, साक्षात्कारस्थले ज्ञानेत्युक्तौ परोक्षज्ञानकारणनिरुक्तवृत्तावतिप्रसङ्गस्तद्वारणाय सा-

क्षात्कारेति, तथा करणस्थले हेतुपदनि-
वेशे कर्मणां शान्त्यादीनामपि बहिरङ्गा-
न्तरङ्गहेतुत्वेन तादृक्स्थले व्यभिचारपरि-
हारार्थं करणेति, एकपदं लौकिकव्या-
पारान्तरव्युदासाय, परागणपदं वैदि-
ककर्मरत्यभावार्थम्, जनयदिति प्रति-
बन्धराहित्यार्थम्, चित्तेति पराभिमता-
त्मधर्मेच्छाव्यावृत्त्यर्थम् ॥ १८४७ ॥

विविदिषासंन्यासः—विवेकादिसाधनस-
म्पन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्या-
सः । स द्विविधः जन्मापादककाम्यक-
र्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वकद-
ण्डधारणाद्याश्रमरूपश्च । तत्र भगवदाज्ञा-
पालनमात्रबुद्ध्या स्वीयानित्यादिश्रौतस्मार्ता-
नुष्ठानपूर्वकमवशिष्टाखिलकर्मतत्साधनध-

नाचनादरदार्ढ्यमाद्यः, धर्मपत्न्यादिप्रति-
बन्धाभावे सति यथा विधिप्रैषोच्चारण-
पूर्वकदण्डकमण्डलुकाषायाङ्कितकन्थाकौपी-
नद्वयाचारवस्त्रैकवाद्याच्छबहिर्वासात्मक-
वसनपञ्चके (कधारणे)तरपरिग्रहराहित्य-
मन्त्यः ॥ १८४८ ॥

विवेकः—नित्यानित्यवस्तुवि(चारः)वेचनम् ।

विशिष्टत्वम्—विशेषणयुक्तत्वम् ॥१८५०॥

विशिष्टाद्वैतम्—विशिष्टं च ( व्याकृतना-
मरूपविशिष्टं चिदचित् ) विशिष्टं च (अ-
व्याकृतनामरूपविशिष्टं चिदचित् ) विशि-
ष्टे, तयोरद्वैतम् ॥ १८५१ ॥

विशेषत्वम्—अल्पव्यापकत्वम् *१* स्वे-

---

१ शिखासूत्रादि । २ स्वतोव्यावर्तकत्वम्-
स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेत-

तो व्यावर्तकत्वम् *२*निःसामान्यत्वे
सत्येकमात्रसमवेतत्वम् १ यद्वा, परमसीमा-
वर्त्तित्वे सति नित्यद्रव्यमात्रवृत्तिः॥ १८५८॥
विशेषणत्वम्—व्यावर्तकत्वम् १ मत्या-
विशेषणत्वम्—व्यावर्तकत्वम् १ प्रत्या-
दयव्यावृत्त्यधिकरणतावच्छेदकत्वम् २स्व-
कालनियतव्यावृत्तिबोधजनकत्वं वेत्यद्वैत
रलरक्षणे मधुसूदनः ३ कार्यान्वयित्वे-
सति कार्यकाले नियमेन वर्तमानत्वे सति
व्यावर्त्तकत्वम्, यथा नीलरूपादिकं घट-
स्य ४ प्रतीयमानविशिष्टप्रतियोगित्वमिति
ग्रं० ५ तद्विविधं केवलविशेषणं लक्षण-
रूपविशेषणं च । सजातीयमात्रव्यावर्तकं
केवलम्, स्वेतरकृत्स्नव्यावर्तकं लक्षण-
रूपमिति सायणाचार्यैः ॥ १८६० ॥

---

रभेदानुमित्याविषयत्वम् ।

विशेष्यत्वम्–व्यावर्त्यत्वम् ※१※ प्रतीयमानविशिष्टसम्बन्धानुयोगित्वम् ॥१८६२॥

विशेषणविशेष्यभावसम्बन्धः–मिथो विशेष्यविशेषणयोरनुलोमप्रतिलोमतया विशेष्यविशेषणत्वे॥१८६३॥

विशेषाहङ्कारः–ब्राह्मणोहं क्षत्रियोहमित्याद्यभिमानात्मिका चित्तवृत्तिः॥१८६४॥

विश्रामः–प्रवृत्तव्यापारस्यावसानम्१८६५॥

विश्वो जीवः–जागरे व्यष्टिस्थूलशरीराभिमानी १ व्यष्टिस्थूलसूक्ष्मकारणशरीरत्रयोपहितं चैतन्यमिति ग्रं० ॥१८६७॥

विषयः } अभिधेयः } विचारार्हं वाक्यम् १ विचारविधायकं वाक्यं वेति न्यायमालायाम् ※२※ शास्त्रजप्रमानिरूपज्ञानगोचरः ※३※पदवाच्यम् ※४※ ज्ञायमानत्वे सति

भोगोपयोगी८शरीरेन्द्रियभिन्नत्वे सति सा क्षात्परम्परया वोपभोगसाधनत्वे सति ज-न्यद्रव्यत्वं विषयत्वम् । शरीरादावतिव्या-प्तिनिरासाय शरीरेन्द्रियभिन्नत्वे स-तीति, परमाण्वादावतिव्याप्तिवारणाय द्वि-तीयसत्यन्तम् , कालादिवारणाय ज-न्यद्रव्यत्वमिति ग्रं० ॥१८७३॥

विषयगत(अप्रत्य)परोक्षता—योग्यावि-षयस्यानावृतसंविदात्म्याभावः १८७४

विषयगता(प्रत्य)परोक्षता—ज्ञानाकारा-र्पणक्षमो हेतुत्वम् । चक्षुरादिवारणायाका-रसमर्पकत्वविशेषणमिति सौगताः १ इन्द्रियजन्यज्ञानविषयत्वमिति नैयायि-काः २ प्रमातृसत्ताऽभिन्नसत्ताकयोग्यत्वे-सति स्वाकारवृत्त्युपहित ( प्रमातृचैतन्य

'न्याभिन्नत्वम्' सत्तातिरिक्तसत्ताशून्य-
त्वम् ) साक्षिचैतन्याऽध्यस्तत्वम् ३ तत्तद-
र्थस्य स्वव्यवहारानुकूलचैतन्या ( नावृ-
तविषया ) भेदत्वमिसद्वैतविद्याचार्यः ॥

विषयवासना-शब्दादिविषयाणां भुज्य-
मानत्वदशाजन्यः संस्कारः ॥ १८८० ॥

विषयानन्दः-तत्तत्स्रक्चन्दनवनितादिवि-
षयाकारैकाग्रबुद्ध्यभिव्यङ्ग्यानन्दः॥१८८१॥

वीतानुमानम्-अन्वयमुखेन प्रवर्त्तमानं
विधायकमनुमानम् ॥१८८२॥

वृत्तिः-शाब्दबोधानुकूलस्मारकत्वप्रयोज-
कमूलसंबन्धः१ शाब्दबोधहेतुपदार्थोपस्थि-
त्यनुकूलः पदपदार्थयोः स्मार्यस्मारकभाव-
सम्बन्ध इति ग्रं० २विषयचैतन्याभिव्यञ्जको

---

१ अभिव्यञ्जकत्वम्-अस्तिव्यवहारजनकत्वम्।

न्तःकरणाज्ञानयोः परिणामविशेषः ।
व्यावहारिकघटपटाद्यर्थाकारवृत्तावन्तःक-
रणस्य परिणामात्मिका वृत्तिः प्रातिभा-
सिकशुक्तिरजताद्यर्थाकारवृत्तौ त्वज्ञान-
स्य परिणामात्मिका वृत्तिरिति विभागः ।
क्रोधादिवृत्तावतिव्याप्तिवारणार्थं विषय-
चैतन्याभिव्यञ्जकइत्युक्तम्, चक्षुरादौ
विषयचैतन्याभिव्यञ्जकेऽतिव्याप्तिवारणा-
र्थमन्तःकरणाज्ञानयोः परिणामवि-
शेष इति वे०२सा द्विविधा प्रमाऽप्रमा-
चेति ल०तत्तच्छब्दे(२९–१७६–पृ०) द्र०
वृत्तिविषयत्वम्–शक्तिलक्षणाकृत्तद्धिता-
न्तसमासानामन्यतमज्ञानाधीनज्ञानविषय-
त्वमिति गौडब्र०॥ १८८६ ॥
वृत्तिव्याप्तित्वम्–विशिष्टशब्दादिप्रमाण-

बलात्तत्तद्विषयाकारधीसमुन्मेषाभिव्यक्तत्वमिति वे०सारटीकायां रामतीर्थः॥१८८७॥

वेगसंस्कारः—क्रियाजन्यत्वे सत्यन्यक्रियाजनकः ॥ १८८८ ॥

वेदः—अपौरुषेयं वाक्यम् । भारतादावतिव्याप्तिवारणायापौरुषेयमिति विशेषणम्, आत्मादौ तद्दोषवारणाय वाक्यमिति विशेष्यम् १. यद्वा, सम्प्रदायानुसारेण स्वरादिविशिष्टा या वर्णानुपूर्वी परिपाटी स इति मी० २ इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति सः। अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते इति कृष्णयजुरैतरेयब्राह्मणयोर्भाष्यभूमिकायां सायणाचार्येणोक्तम् ३ धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यमिति

प्रस्थानभेदे मधुसूदनः ४ शब्दतदुपजी-
विप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविष-
यार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञाना-
जन्यप्रमाणशब्दत्वं वेदत्वम् । व्यासादि-
चाक्षुषजन्ये भारतादौ दृष्टार्थकायुर्वेदादौ
चातिव्याप्तिवारणाय सत्यन्तमिति शब्द-
चिन्तामणौ ५ शब्दातिरिक्तं शब्दो-
पजीविप्रमाणातिरिक्तं च यत्प्रमाणं तज्ज-
न्यप्रमितिविषयानतिरिक्तार्थको यो यस्त-
दन्यत्वे च सति जन्यज्ञानाजन्यो यः प्र-
माणशब्दस्तत्त्वमिति संक्षेपोद्धारे ६ मन्त्र-
ब्राह्मणा(णसमुदायत्वम्) त्मकत्वमिति ग्रं०
७ अत्र ऋगादयो वेदाः तत्प्रतिपत्त्यर्थं वि-
चारं कुर्वन्तीति वेदाख्यामवाप्नुयुः ८ अ-
थवा सद्भावं साधयन्तीति वेदाः ९ विद-

न्ति वेदनहेतुभूता इति वा वेदाः १० ब्र-
ह्माधीनमात्मानं लभन्त इ० ११ ब्रह्मादी-
नामात्मानं लभन्त इ० १२ ब्रह्मणाकृ-
तस्य लाभहेतव इ० १३ ब्रह्मणात्मतया-
लाभहेतव इति वा वेदाः १४ विद वि-
चारणे, विदसत्तायां विद ज्ञाने, विद्लृ
लाभे इति सनत्सुजातीयभाष्ये ११०२॥
वेदान्तः—वेदानामन्तोऽवसानभागः ११०३
वैखरीवाक्—मौखिकवाय्वभिव्यङ्ग्यः सर्व
श्रुतिगोचरः स्थूलः शब्दः ॥ ११०४ ॥
वैखानसः—अकृष्टपच्यौषधीभिर्ग्रामबहिष्कृ-
ताभिरग्निहोत्रादिकुर्वन् ॥ ११०५ ॥
वैधर्म्यम्—असाधारणो धर्मः १ तद्वृत्तित्वे
सति तदितरावृत्तित्वं वा ॥ ११०७ ॥
वैधर्म्यदोषः—एकधर्म्यसमावेशः ॥११०८॥

वैयधिकरण्यम्-भिन्नविभक्त्यन्तानां पदानां विभिन्नार्थनिष्ठत्वम् ॥ १९०९ ॥

वैयात्यम्-निर्लज्जम् १ अप्रतिसमाधेयप्रश्नपरम्परायां मौनम् ॥ १९११ ॥

वैराग्यम्-विषयेषु जिहासा १ विषयवैतृष्ण्यं वा२दृष्टादृष्टविषयेषु स्पृहाविरोधिचित्तपरिणामविशेष इति ग्रं०२ तद्द्विविधं परमपरञ्चेति ल०त०[३४-१८७पृष्ठे]द्र० ॥१९१९॥

वैराग्यकारणम्-शरीरं व्रणवत्तद्दन्नं च व्रणलेपनम्, व्रणशोधनवत्स्नानं वस्त्रं च व्रणपट्टवत् ॥ १९१८ ॥

वैशेषिकशास्त्रम्-कणादप्रणीतं विशेषपदार्थमाधिकृत्य कृतो ग्रन्थः ॥ १९१६ ॥

वैश्वदेव(बलि):-अग्निपितृगोश्वकाकादिभ्यो मन्त्रविशेषेण दीयमानः (नो बलिः) ।

वैष्णवः-वैखानसाद्यागमोक्तदीक्षायुक्त इति निर्णयसिन्धौ ॥ १९१८ ॥

व्यञ्जकत्वम्-स्वविषयेऽस्तिप्रकाशत इत्यादिव्यवहारप्रतिबन्धकमात्रापनेतृत्वम् १९१९

व्यतिरेकः-परस्परमर्थागमनम् *१* यदभावे यदभावः ॥ १९२१ ॥

व्यतिरेकवैराग्यम्-चित्तगतदोषाणां मध्ये पक्केभ्योऽपक्वान्व्यतिरेकेणावधार्य तज्जिहासा ॥ १९२२ ॥

व्यतिरेकव्यभिचारः-कारणाभावे कार्यसत्त्वम् १ कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमिति ग्रं० ॥ १९२४ ॥

व्यतिरेकव्याप्तिः-साध्याभावव्यापकीभूताभावप्रतियोगित्वम् ॥ १९२५ ॥

व्यतिरेकसहचारः कारणाभावे कार्याभाव

व्याधिकरणत्वम्- भिन्नविभक्त्यन्तत्वे सति भिन्नार्थनिष्ठत्वम् ॥ १९२७ ॥

व्यपदेशः-निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारः *१* एकस्मिन्नुभयारोपः, यथा देवदत्तस्यैक एव पुत्रः स एव ज्येष्ठः स एव कनिष्ठ इति ग्रं० ॥१९२९॥

व्यभिचारः-साध्याभाववद्वृत्तित्वम् १९३०

व्यभिचारी-साध्यवज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते ॥ १९३१ ॥

व्यवधानम्-द्रव्यान्तरेण द्रव्यान्तरस्याच्छादनम् ॥ १९३२ ॥

व्यवसायत्वम्-विषयाविषयकज्ञानत्वम् ॥

व्यवस्था-विषयान्तरपरिहारेण विषयाविशेषस्थापनम् ॥ १९३४ ॥

व्यवहारः-का (ज्ञानजनकश०)र्यानुकूलश०

०प्रयोगः १ अर्थविशेषबोधनाय शब्दविशेषप्रयोग इति पु० २ वादिप्रतिवादिकर्तृकः सम्भवद्योगसाक्षिप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापार इति मदनरत्ने २ व्यवह्रियते हानोपादानादिकं क्रियतेऽनेनेति ॥ १९३७ ॥

व्यष्टिः—प्रत्येकवृक्षवदनेकबुद्धिविषयत्वे व्यक्तिव्यावृत्तत्वं व्यष्टित्वम् ॥ १९३९ ॥

व्यसनम्—इष्टानिष्टवस्तुविषयं चित्तसंलग्नम् । तत्पञ्चविधम्—गृहक्षेत्रादिसम्पादनेच्छाहेतुर्व्यसनं विश्वव्यसनम् १ परराष्ट्राभिभवादीच्छया सेवकवृन्दार्थेच्छाहेतुर्व्यसनं सेवकव्यसनम् २ शेषं उत्सवतनुपनशब्दे [७५—१२४—२०५ पृष्ठे] द्रष्टव्यम् ॥

व्याकरणम्—प्रत्ययविधानसामर्थ्यादर्थनि-

श्रयः १ अर्थविशेषमाश्रित्य स्वरप्रकृति-
प्रत्ययादिविशेषादीन्विदधत्पदखण्डार्थवि-
शेषज्ञापको ग्रन्थ इति ग्रं० २ वेदाङ्गत्वे सति
शब्दसाधु(ताबोधक)त्वाख्यापकम् १९४३
व्याकरणप्रयोजनम्-वैदिकपदसाधुत्वज्ञा-
नेनोहादिकम् १. म्लेच्छामाभूमेत्यध्येयं व्या-
करणमिति महाभाष्ये ॥ १९४५ ॥
व्याख्यानम्-पदच्छेदः पदार्थोक्तिर्विग्रहो
वाक्ययोजना, आक्षेपस्य समाधानं व्या-
ख्यानं पञ्चलक्षणम् ॥ १९४६ ॥
व्याघातः-परस्परविरुद्धधर्मयोरेकाधिकर-
णे समुच्चयः, यथा मम माता वन्ध्या ॥
व्याजः-अन्यफलसाधनतया स्वेष्टस्यान्य-
फलसाधनत्वेन ज्ञापितस्याचरणम् १९४८
व्यापकत्वम्-सर्वसंबद्धत्वम् १ देशाद्यन्त-

राहितत्वं वा २ सजातीयादिभेदरहितत्वं-
चेति वेदा० ३ हेतुसमानाधिकरणात्यन्ता-
भावाप्रतियोगित्वम् ४स्वाधिकरणवृत्त्यन्ता-
भावाप्रतियोगित्वं चेति न्या० ॥१९५३॥
व्यापारः-करणजन्यकरणक्रियाजनकः १
तज्जन्यत्वे सति तज्जन्यजनकत्वम्, यथा
कुठारदारुसंयोगः। ईश्वरेच्छादिवारणाय
तज्जन्यत्वे सतीति, दण्डरूपादिवारणाय
तज्जन्यजनकत्वमिति ग्रं० ॥ १९५५ ॥
व्याप्तिः-साध्याभाववदवृत्तित्वमिति पूर्व-
पक्षे १ साध्यसाधनयोर (र्नियतसामाना-
धिकरण्यम् २ ) व्यभिचरितसम्बन्धः ३
साधनसमानाधिकरणात्यन्ताभावाप्रतियो-

---

१ कारकेण जन्यत्वे सति तत्कारकजन्य-
क्रियां प्रति जनक इत्यर्थः।

गिसाध्यसामानाधिकरण्यमिति ग्रं०।१९६१

व्याप्यत्वम्—न्यूनदेशवृत्तित्वम् *१* अ-
व्याप्याभाववदवृत्तित्वम् *२* साध्यवद-
न्यावृत्तित्वे सति व्याप्त्याश्रयत्वमिति पु०

व्याप्यवृत्तित्वम्—स्वसमानाधिकरणात्य-
न्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् ।

व्यावर्तकत्वम्—लक्ष्यवृत्तित्वे सतीतरभेद-
व्याप्यत्वम् ॥ १९६४ ॥

व्यावहारिकत्वम्—आगन्तुकदोषासहकृ-
ताविद्याकार्यत्वम् ॥ १९६५ ॥

व्यावहारिकसत्त्वम् } आत्मज्ञानपूर्वाबाध्य-
अज्ञातसत्ताकत्वम् } त्वम् १ संसारदशाया-
मबाधितत्वं वा ॥ १९६७ ॥

व्यासज्यवृत्तित्वम्—एक ( त्वानवच्छि )
मात्रवृत्तिधर्मावच्छिन्नपर्याप्तिम(क)त्त्वम् ॥

व्युत्पत्तिः—शब्दानामर्थावबोधकशक्तिः १ समुदायशब्दस्यावयवशोऽर्थबोधकताशक्तिर्वा

व्रतम्—नियमाभिधानम् १ सम्यक्सङ्कल्पजनितानुष्ठेयक्रियाविशेषरूपमिति हेमाद्रिव्रतखण्डे ॥ १९७२ ॥

## श

शक्तिः—कार्यजननानुकूलं कारणनिष्ठं सामर्थ्यमिति वेदान्तिमते १ अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छेति न्यायमते २ सा चतुर्विधा योगो रूढिर्योगरूढिर्यौगिकरूढिश्चेति ल०त०[२२१–२२४पृ०]द्र० । १९७४

शक्तिवृत्तिः } मुख्यावृत्तिः } पदानामन्वयानुभवजननसामर्थ्यम् १ पदपदार्थयोर्वाच्यवाचकभावसम्बन्धो वा । लक्षणावारणाय मुख्येति ॥ १९७६ ॥

शक्तिग्रहम्—व्याकरणोपमानकोशाप्तवा-
क्याद्व्यवहारतश्च, वाक्यस्य शेषाद्विवृत्तेर्वद-
न्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

शक्यत्वम्—पदनिष्ठशक्तिविषयत्वम् ११७७

शठः—कामिनीविषयकपटपटुः ॥ ११७८ ॥

शब्दः—श्रोत्रग्राह्यो गुणः । रूपादावतिव्या-
प्तिवारणाय श्रोत्रेति, शब्दत्वेऽतिव्याप्ति-
वारणाय गुण इति *१* आकाशविशेष-
गुण इति नैयायिकप्राभाकरयोर्मते २ व-
र्णात्मकत्वे सतीन्द्रियसम्बन्धाज्ज्ञानहेतुः ३
वर्णतादात्म्येनार्थबोधजनकत्वम् ॥ ११८२॥

शब्दतात्पर्यम्—तदितरप्रतीतिमात्रेच्छया-
ऽनुच्चरितत्वे सति तदर्थप्रतीतिजननयो-
ग्यत्वम्, यथा भोजनप्रकरणे सैन्धवमा-
नयेतिवाक्यस्थं सैन्धवपदं लवणेतराश्वा-

दिप्रसायनेच्छयाऽनुच्चरितत्वे सति लवण-
रूपार्थविषयकप्रतीतिजननयोग्यमिति। भो-
जनप्रकरणे सैन्धवमानयेत्युक्ते लवणा-
नयनप्रतीतिवदश्वानयनप्रतीतिरपि स्यात्त-
द्योग्यत्वस्य विद्यमानत्वात्तद्वारणायपूर्वद-
लम्, तथाप्युभयेच्छया सैन्धवमानयेत्युक्ते
वाक्येऽव्याप्तिवारणाय मात्रेति, उभये-
च्छयायुक्तत्वेपि तदितरप्रतीतिमात्रेच्छया-
नुच्चरितत्वस्य सत्त्वान्नाव्याप्तिः ॥१९८३॥
शब्दप्रमाणम्—शाब्दप्रमाकरणमितिवे०१य-
थार्थवाक्यम् २आप्तोच्चरितत्वे सति वाक्यत्वं
शब्दत्वम्। वाक्यमात्रोक्तावनाप्तोच्चरितवा-
क्येऽतिव्याप्तिरत आप्तोच्चरितत्वानिवेशः,
वाक्यमात्रोक्तौ जबगडदशादावतिव्याप्तिर-
तो वाक्यत्वमिति ग्रं० ३ स्वसमानवि-

षयवाक्यार्थयथार्थज्ञानजनकत्वमिति चि-
न्तामणौ ४ तात्पर्यविषयाबाधितसंस-
र्गगोचरशाब्दज्ञानजनकत्वमिति पु० ५
असन्निकृष्टार्थप्रतिपादकं वचनम् । अनुवा-
दविसंवादव्यवच्छेदायासन्निकृष्टपदम् ,
अपेक्षितादिपदनिराकरणायार्थग्रहणम्, अ-
नुमानत्वनिराकरणाय वचनग्रहणमिति
मीमांसकमते ६ शब्दविज्ञानादसन्निकृष्टे-
ऽर्थविज्ञानमिति शाबरभाष्ये ७ समयबलेन
सम्यक्परोक्षानुभवसाधनम् । अनुमाना-
दिव्यावृत्त्यर्थं समयग्रहणम्, प्रत्यक्षव्या-
वृत्त्यै परोक्षग्रहणम्, संशयादिव्यावृत्त्यै
सम्यग्ग्रहणम्, स्मृतिव्यावृत्त्यर्थमनुभव-
ग्रहणमिति भूषणकारः ॥ १९९१ ॥
शमः-नित्यनैमित्तिककर्मातिरिक्तानां व्या-

धाराणामन्तरिन्द्रियनिग्रह इति गूढार्थत-
त्त्वालोके धर्मदत्तः १ ब्रह्मज्ञानोपयोगिव्या
पारातिरिक्तचित्तव्यापारमात्रनिरोध इति
सदानन्दीशङ्करादिग्रि० ॥ १९९३ ॥

शरीरम् } निरपेक्षत्वागिन्द्रियाधारः। अङ्गु-
क्षेत्रम् } ल्याद्यवयवानां प्रत्येकं शरीर-
त्वनिरासाय निरपेक्षपदमिति देहात्मवा-
दिमते १ अन्त्यावयविमात्रवृत्तिचेष्टावद्वृ-
त्तिजातिमत्त्वं शरीरत्वम्। हस्तत्वपृथिवी-
त्वद्रव्यत्वसत्त्वादिवारणाय प्रथमवृत्त्यन्त-
म्, घटत्वादिवारणाय चेष्टावद्वृत्तीति,
घटशरीरसंयोगादिवारणाय जातीति न्या-
यग्रन्थे २ सुखदुःखान्यतरसाक्षात्काररूप-
भोगायतनमिति वे० ग्रन्थे ३ शीर्यत प्रति-
क्षणं नश्यतीति। तच्च स्थूलसूक्ष्मकारण-

भेदात्रिविधम् । योनिजायोनिजभेदाद्द्विविधमिति तार्किकमतं ल० तत्त्वच्छंदे [४४–२२२ पृ०] द्रष्टव्यम् ॥ १९९६ ॥

शरीरित्वम्–भोगावच्छेदकत्वम् ॥ १९९७ ॥

शाब्दबोधः–एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानम् ॥ १९९८ ॥

शाब्दी प्रमा–वाक्यकरणिका प्रमा १. सा द्विविधा लौकिकी वैदिकी चेति ल० तत्त्वच्छ० [ २३० ] दृश्यम् ॥ १९९९ ॥

शाब्दी भावना–पुरुषप्रवृत्त्यनुकूलो(लभवक) भावयितुर्व्यापारविशेषः ॥ २००० ॥

शारीरक(शास्त्रम्) मीमांसा–वेदान्तानां ब्रह्मणि तात्पर्यनि (रूपकम्) र्णायिका १ शास्यते प्रतिपाद्यते तत्त्वं शिष्येभ्योऽनेनेति । शारीरको जीवः तमधिकृत्य कृतो

ग्रन्थः शारीरकः ॥ २००२ ॥

**शास्त्रत्वम्**—हितशासकत्वमिदं सामान्यलक्षणम् १ एकप्रयोजनोपनिबद्धत्वे सत्यशेषार्थप्रतिपादकत्वमिति प्र० का० भाष्यटीकायां आनन्दगिरिः २ प्रवृत्तिश्च निवृत्तिश्च पुंसां येनोपदिश्यते, तद्धर्माश्चोपदिश्यन्ते शास्त्रं शास्त्रविदो विदुः ३ तच्च न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तभेदेन षड्विधमिति ल० त०(१५०-२१२) [२५५-२८६ पृ०] द्र० ॥

**शास्त्रवासना**—शास्त्रानुभवजनितत्वे सति शास्त्रस्यैव पुनः पुनः(वादिजयाद्यर्थम्)स्मरणहेतुः । सा पाठव्यसनबहुशास्त्रव्यसनानुष्ठानव्यसनभेदेन त्रिविधाल० तत्त० [१६३ पृ०]द्र० क्लेशबहुत्वात्पुरुषार्थानुपपा-

गित्वाद्दर्पहेतुत्वाद्दुःसंपादत्वाज्जन्महेतुत्वा-
च्च समस्तशास्त्रवासनामलिना ॥ २००६ ॥

शास्त्रीयगुणाधानवासना—गङ्गास्नान-
शालिग्रामतीर्थादिसम्पादनम् ॥२००७॥

शास्त्रीयदोषापनयनवासना—स्नानाच-
मनादिभिराशौचाद्यपनयनम् ॥ २००८ ॥

शास्त्रीयबाधः—अथात आदेशोनेति
नेतीत्यादिश्रुत्या ब्रह्मव्यतिरेकेण प्रपञ्चा-
भावनिश्चयः ॥ २००९ ॥

शिक्षा—ह्रस्वदीर्घादिवैदिकस्वरोच्चारणप्र-
तिपादकं शास्त्रम् १ शिक्ष्यते स्थानादिकमनया

शिक्षाप्रयोजनम्—उदात्तानुदात्तस्वरितह्र-
स्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकव-
र्णोच्चारणविशेषज्ञानम् ॥ २०११ ॥

शिष्टत्वम्—अनुशासनयो (विषय)ग्यत्वम्

* १ * वेदोक्ताबाधितप्रामाण्यार्थाभ्युप-
गन्तृत्वे सति वेदविहिताऽकरणप्रत्यवाय
फलककर्मकारित्वम् । चैत्यवन्दनप्रवृत्तबौ-
द्धे व्यभिचारवारणाय वेदविहितेति ॥

शिष्टाचारः—शिष्टैर्धर्मबुद्ध्याऽनुष्ठीयमाना(चा
रः १) लौकिकव्यवहारः ॥ २०१९ ॥

शिष्यम्—शिक्षणीयम् १ उपदेशविषयो वा ॥

शुद्धि—वैदिककर्मयोग्यतासम्पादकसंस्कारः॥

शु(द्ध) भवासना—विहितविहितसमविद्या-
कर्मतत्संस्काररूपा । विहिता विद्यादे-
तत्फलसंस्कार
वतोपासनादिरूपा, विहितसमा आक-
स्मिकदेवतामूर्तिदर्शनादिरूपा, विहितं
कर्म संध्यावन्दनादि, विहितसमं पि-
पीलिकादिभ्यो बुद्ध्या विपिने गत्वान्नदा-
नादि, एतेषां चतुर्णां संस्कारास्तथैतेषां त-

तोऽपि पूर्वजन्मकृतानां यानि जन्मान्तरे फलानि देवलोकाद्याप्तिरूपाणि तेषां च संस्कारा इति शुभवासनोदाहरणानि । अविनाश्यैश्वर्यमत्त्वे सति साधुसेवितं वा । निमेषोन्मेषादावतिव्याप्तिवारणाय विना-शीति जी०वि०टीकायाम् ॥ २०२० ॥

शुभेच्छाज्ञानभूमिः—नित्यानित्यवस्तुविवेकादिपुरःसराफलपर्यवसायिनी मोक्षेच्छा-

शृङ्गारः—रतिक्रीडाद्यर्थस्त्रीपुंसयोरन्योन्यमतीच्छा ॥ २०२२ ॥

शेषत्वम्—उपकारित्वम् । परोद्देश्यप्रवृत्तिकत्वं वा ॥ २०२४ ॥

शैवः—पाशुपताद्यागमोक्तदीक्षायुक्तः २०२५

शोकः—इष्टवियोगानुचिन्तनम् ॥२०२६॥

शोधनत्वम्—दोषनिवारणत्वम् ॥२०२७॥

शौचम्—करचरणादिप्रक्षालनम् १ शरीरमनसोः शुद्धिर्वा २ अहं ममेति विण्मूत्रलेपगन्धादिमोचनम्, शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥ २०२९ ॥

श्यामा—शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला, तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता ॥ २०३० ॥

श्रद्धा—गुरूक्तवेदान्तवाक्यार्थावश्यं भावित्वनिश्चयः १ शास्त्राचार्योपदिष्टेर्थेऽननुभूतेऽप्येवमेवैतदिति विश्वासो वा ॥२०३१॥

श्रवणम्—उपक्रमादिभिः षड्भिर्लिङ्गैर्वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणम् १ समन्वयाध्यायोक्ततात्पर्यनिश्चायकोपक्रमादियुक्त्यनुसन्धानमित्यद्वैतासिद्धौ २

---

१ लीनस्यार्थस्य (तात्पर्यादेः) गमकम्।

श्रुतिवाक्यानां कुत्र तात्पर्यमिति जिज्ञासा-यां तन्निर्णयानुकूलो व्यापार इति ग्रं० ॥

श्राद्धम्–अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्याग इति या० मिताक्षरायाम् ॥ २०३६ ॥

श्रीगुरुत्वम्–मोक्षलक्ष्मीलक्षणलक्षितत्वम् ॥

श्रुतार्थापत्तिः–अनुपपद्यमानार्थश्रवणा-त्तदुपपादकीभूतार्थान्तरकल्पनम् । सा द्वि-विधा–अभिधानानुपपत्तिरभिहितानुपप-त्तिश्चेति ल०त० [४१–४२ पृ०] द्रष्टव्यम्॥

श्रुतिः–स्वार्थं वक्तुं पदान्तरानपेक्षं पदम् ॥१॥ क्रमपरवचनम् २ निरपेक्षो रवो वा। रव इत्युक्ते वाक्यादवतिप्रसङ्गस्तद्वारणाय निरपेक्ष इत्युक्तमिति मीमांसकाः ३ श्रूयते इति । श्रुति स्मृति विरोधे तु

स्मृतेस्त्यागो विधीयते, तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् ॥ २०४१ ॥

श्रोत्रम्—शब्दो (ऽद्ज्ञानजनकमपि) पलब्धिसाधनमिन्द्रियम् ॥ २०४२ ॥

श्रोत्रियत्वम्—वेदवेदाङ्गपारगत्वम् १ वेदान्तार्थपारगत्वं वा ॥ २०४४ ॥

श्लाघा—निजगुणाविष्करणम् ॥ २०४६ ॥

श्लोकः—चतुष्पादात्मकः १ छन्दोविशिष्टवाक्यरचनं वा २ श्लोक्यते शस्यतेऽनेनेति।

## स

स(सा)ङ्क(र्य)रः—परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेक(काधिकरणवृत्तित्वम्) त्र समावेशः, यथा भूतत्वमूर्त्तत्वयोः २०४८

सङ्केतः—अर्थबोध(न)नाशक्तिविशेषः१ स्मा-

---

१ इतर(=प्रत्यक्षादि)प्रमाणम् ।

भिप्रायव्यञ्जकचेष्टाविशेषो वा ॥२०५०॥

सङ्कोचः—बहुविषयकवाक्यस्याल्पविषयकत-याव्यवस्थापनम् ॥ २०५१ ॥

सङ्क्रान्तिः-राश्यन्तरसंयोगानुकूलव्यापारः

सङ्क्षेपः भूयसोऽर्थस्याल्पवाक्यादिना प्रकाशनम्

सखण्डोपाधिः—बहुपदार्थघटितो धर्मः ।

सङ्ख्या—एकंद्वेत्रीणीत्यादिप्रत्यक्षविषयो गु-णः १ ए(गणनव्य)कत्वादिव्यवहारासा-धारणकारणत्वम् । घटादिवारणायैकत्वा-दीति, कालादिवारणायासाधारणेति ॥

सङ्गतिः—पदपदार्थयोः स्मार्यस्मारकभाव-सम्बन्धः *१* अनन्तराभिधानप्रयोज-कजिज्ञासाजनकज्ञानविषयत्वम् २ सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा, निर्वाहकै-क्यकार्यैक्ये षोढा सङ्गतिरिष्यते ॥२०५८॥

सङ्ग्रहः—बह्वर्थकवाक्यानामेकत्र सङ्कलनम् १
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः,
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः
सङ्घातः—समानधर्मवतां परस्परसम्बन्धः १
दृढसंयोगः समूहो वा ॥ २०६० ॥
सजातीयभेदः—समानजातिकृतो भेदः,
यथा वृक्षस्य वृक्षान्तरात् ॥ २०६१ ॥
सञ्चितकर्म—जन्मान्तरहेतुभूतं सदवस्थितं पूर्वजन्मीनं(यं) कर्म ॥२०६२ ॥
सञ्ज्ञा—नाममात्रबोधिका ॥ २०६३ ॥
सत्कारः—साधुरयं तपस्वी ब्राह्मण इत्येवमविवेकिभिः क्रियमाणा स्तुतिः ॥२०६४॥
सत्ता—आत्मधारणानुकूलव्यापारः २०६५
सत्त्वत्वम्—लघुत्वे सति ज्ञानसुखहेतुत्वम् ।
सत्यम्—स्वीकारः ॥१॥ अनर्थाननुबन्धि-

यथाभूतार्थवचनम् २ प्रियहितप्रमाणदृष्ट-
श्रुतार्थभाषणं वा *३* विधिसुखप्रतीति-
विषय इति वे० ४ यथार्थज्ञानविषय इति नै०। त्वं

सत्त्वापत्तिः-निर्विकल्पकब्रह्मात्मैक्यसा-
क्षात्कारः, स्वप्नवज्जगतो मिथ्यात्वेनस्फुर-
णात् स्वप्न इति चोच्यते ॥ २०७२ ॥

सदसद्विलक्षणत्वम्-प्र (स्वरूपवा) ती-
यमानत्वे सति बाधयोग्यत्वम् ॥२०७३॥

सदाचारः-वेदादिशास्त्रानुसारी आचारः॥

सदुत्तरम्-पृष्टस्य सम्यगुत्तरम् १ प्रतिज्ञा-
पत्रानुसारिण्यु(र्यु)त्तरं वा ॥ २०७६ ॥

सन्तोषः-विद्यमानभोगोपकरणादधिकस्या-
नुपादित्सारूपा चित्तवृत्तिः ॥ २०७७ ॥

सन्देशः-वाचिकार्थकथनम् ॥ २०७८ ॥

सन्देहः-एकस्मिन्धर्मिणि विरुद्धकोटिद्वय-

ज्ञानम्, यथा पर्वतो वह्निमान्न वा २०७९

सन्दंशनम्–एकाङ्गानुवादेन विधीयमानयो-र्द्वयोरन्तराले विहितत्वम्, यथाभिक्रमणम्।

सन्धिः–अन्योन्यं सन्धानम् *१* अर्द्ध-मात्रोच्चारणकालेनाव्यवहितयोर्वर्णयोर्द्रुत-तरोच्चारणम् ॥ २०८२ ॥

सन्ध्या–रात्रेराद्यन्तदण्डचतुष्टयात्मककालः

सन्निधिः–पदानामविलम्बोच्चारणम् २०८४

सन्निपत्योपकारकम्–कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म ॥ २०८५ ॥

सन्निहितत्वम्–स्वरूपाभिन्नत्वे सति संब-न्धित्वम् ॥ २०८६ ॥

समत्वम्–सर्वत्र ब्रह्मदर्शित्वम् ॥२०८७॥

समनियतत्वम्–व्यापकत्वे सति व्याप्य-त्वम् १ तद्व्याप्यत्वे सति तद्व्यापकत्वं वा

**समन्वयः**—वेदान्तानां ब्रह्मप्रमितिजनकत्वमिति तत्त्वदीपने १ ब्रह्मात्मैकत्वप्रतिपादकत्वेन वेदान्तवाक्यानां समनुगतत्वमित्यद्वैतकौस्तुभे ॥ २५९१ ॥

**समवायसम्बन्धः**—अयुतसिद्धयोः सम्बन्ध इति श्रीधरः १ नित्यत्वे सति सम्बन्धत्वम् । आकाशादिवारणार्थं नित्यत्वे सतीति २ संयोगभिन्नत्वे सति साक्षात्सम्बन्धत्वमिति केचित् ॥ २०९४ ॥

**समवायिकारणत्वम्**—समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धा-

---

१ समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसम्बन्धेनैव सत्त्वात् समवायेन घटंप्रति तादात्म्येन कपालं कारणमित्यर्थः ।

वच्छिन्नकारणत्वम् ॥ २०९५ ॥

**समष्टित्वम्**—वनवदेकबुद्धिविषयत्वम् १ गोत्वादिवत्सर्वत्रव्यष्टिष्वनुस्यूतत्वमिति ग्रं०

**समसमुच्चयः**—ज्ञानकर्मणोः परस्परैकस्मिन्काले ऽनुष्ठानम् ॥ २०९८ ॥

**समाधानम्**—विवादभञ्जनम् १ सिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणं वा॥२॥ निद्रालस्यप्रमादत्यागेन स्थितिः ॥३॥ श्रवणाद्यपेक्षितचित्तैकाग्र्यमिति वे० ग्रन्थे

**समाधिः**—व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे सति चित्तस्यैकाग्रता परिणाम इति योगग्रन्थे १ द्रष्टृस्वरूपावस्थानहेतुश्चित्तवृत्तिनिरोध इति वे०ग्रन्थे २ स द्विविधः सविकल्पो निर्विकल्पश्चेति ल०त० [१५८–२८४ पृ०] द्र० ॥ २१०४ ॥

**समानप्राणः**—नाभिस्थानवर्त्तित्वे सत्यशित-पीतान्नपानादेः समीकरणकरः ॥२१०५॥

**समानपदत्वम्**—निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् ॥ २१०६ ॥

**स(सा)मानाधिकरण(ण्यं)त्वम्**—एकाधिकरणवृत्तित्वम् *१* विभिन्नविभक्तिराहित्ये सत्यभेदेनैकार्थबोधजनकत्वम् ॥

**समासः**—सम्यक् प्रासः १ अवसानप्रासो वा *२* चरमवर्णध्वंसवत्त्वं समाप्तत्वम् ३ आरब्धकर्मणः संपूर्णत्वमिति ग्रं० २११२

**समावेशः**—बहूनामर्थानामेकत्र वाक्यादौ व्यवस्थापनम् ॥ २११३ ॥

**समासः**—स्यादिपदानामेकपदतासम्पादकः १ व्यस्तपदयोर्व्यस्तपदानां वैकत्र समसनमिति चन्द्रकीर्त्तिः २ अभिधानाश्रितलो-

पाभाववदन्यमध्यवर्त्तिविभक्तिशून्यनामसमुदायत्वमिति पु० ॥ २११६ ॥

समासप्रयोजनम्—ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वम् ॥ २११७ ॥

समुच्चयः—परस्परानिरपेक्षाणामनेकेषामेकस्मिन्नन्वयः १ कर्तृद्वयस्यैकक्रियानिष्ठत्वमिति पु० २ स द्विविधः समसमुच्चयः क्रमसमुच्चयश्चेति ल०त० [२८० पृष्ठे]द्र० ॥

समूहत्वम्—अपेक्षाबुद्धिविषयत्वम् २१२०

समूहालम्बनम्—नानाप्रकारतानिरूपितनाना(मुख्य)विशेष्यताशालि(नि)ज्ञानम् ॥

सम्प्रदानत्वम्—दानकर्मोद्देश्यत्वम् २१२२

सम्प्रदायः—शिष्टपरम्परावतीर्णोपदेश इति भरतः १ गुरुपरम्परागतसदुपदिष्टव्यक्तिसमूह इत्यपरे ॥ २१२४ ॥

सम्बद्धत्वम्–परस्परमन्वितत्वम्॥२१२५॥
सम्बन्धः–सम्यग्बन्धनम् १. संसृष्टबुद्धिव्यवहारयोर्हेतुर्वा *१.* संबन्धिभिन्नत्वे सति संबध्याश्रितत्वे सत्येकत्वम् २ संबन्धिभिन्नत्वे सति विशिष्ट (बुद्धि) प्रतीतिनियामकत्वमिति ग्रं० ४ स साक्षात्परम्पराभेदेन द्विविधः ल०त०[१५६–२८५पृष्ठे]द्र०॥
सम्बोधनम्-अन्यत्रासक्तस्याभिमुखीकरणम्
सम्भवप्रमाणम्–भूयः सहचारदर्शनजन्यज्ञानम्। यथा सम्भवति ब्राह्मणे विद्या, सम्भवति सहस्रे शतमित्यादौ १ अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणमिति पु० ॥ २१३२ ॥
सम्भावना–शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः *१.* निश्चयप्रायऔत्कट्यापन्नसंशयः. २

उत्कैकैकतरकोटिकसंशयो वेति ग्रं० २१३५

सम्यग्ज्ञातत्वम्—पदवाक्यमानादिविशिष्टज्ञानविषयि(य)ताशालित्वम् ॥ २१३६ ॥

सर्वज्ञत्वम्—स्वरूपचैतन्येन स्वाध्यस्तसर्वजगदवभासकत्वमिति वे० मुक्तावल्याम् सर्वं जानातीति ज्ञः ॥ २१३७ ॥

सविकल्पकम्—वैशिष्ट्यावगाहिज्ञानम्, यथा घटमहं जानामीत्यादिज्ञानम् । वैशिष्ट्यावगाहित्वमिच्छादावपि सत्त उक्तं ज्ञानमिति, ज्ञानत्वञ्च निर्विकल्पकेपीति वैशिष्ट्यावगाहीत्युक्तमिति धर्मराजेन ।

सविकल्पसमाधिः
सबीजसमाधिः
सम्प्रज्ञातसमाधिः } ज्ञातृज्ञानज्ञेयविकल्पावभासपुरःसरमात्मनि चित्तसमाधानम् । अङ्गिसमाधित्वाद्वस्यर्थ मथर्वदलमिति ॥ २१३९ ॥

सहकारित्वम्—स्वभिन्नत्वे सति स्वकार्य-
कारकत्वम् ॥ २१४० ॥

सहचारः—तदधिकरणवृत्तित्वम् ॥२१४१॥

सहसापतनतापः—पुण्यकर्मक्षये मुद्गरादि-
प्रहरणजन्यस्तापः ॥ २१४२ ॥

सहानवस्थानविरोधः—एकाधिकरणे ए-
कस्मिन् (देश) कालेऽनवस्थितिः ॥२१४३॥

सहाप्रतीतिविरोधः—एकाधिकरणे एक-
स्मिन् (देश) कालेऽप्रतीतिः ॥ २१४४ ॥

साक्षात्संबन्धत्वम्—यन्निष्ठसंसर्गतायां प्र-
तियोग्यनुयोगिविषयतानिरूपितत्वमिति ह-
रिनाथभट्टाचार्यः ॥ २१४५ ॥

साक्षात्साधनम्—अव्यवहितपूर्वत्वसंबन्धे-
न कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभाव-
प्रतियोगितानवच्छेदकान्यथासिद्धनिरूप-

कधर्मवत्त्वमिति मथु० ॥ २१४९ ॥

**साक्षित्वम्**—अकर्तृत्वे सति द्रष्टृत्वम् *१* उदासीनत्वे सति बोद्धृत्वम् २ जीवेश्वरानुगतसर्वानुसन्धातृचैतन्यत्वमिति म० ॥

**साङ्ख्यशास्त्रम्**—सम्यग्विविच्य ख्यायन्ते प्रकटीक्रियन्ते तत्त्वानि प्रकृतिपुरुषपदार्थरूपाणि यस्मिंस्तत् ॥ २१५० ॥

**सादृश्यम्**—तद(द्भिन्नत्वे स०)साधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वम् २१५१

**साधकत्वम्** स्वपक्षप्रमितिजनकत्वम् २१५२

**साधनत्वम्**—व्याप्त्याधारत्वम् *१* करणकारकत्वम् *२* कार्यजनकत्वम् *३* ज्ञानप्राप्त्युपायत्वम् ४ ब्रह्मविद्याहेतुत्वं वा ५ तच्च साक्षात्परम्पराभेदेन द्विविधं ल० त० [१५६-२८५ पृष्ठे] द्र० ॥२१५३॥

साधारणम्—अनेकस्वत्ववत्त्वेकस्मिन् २१५८

साधारणकारणत्वम्—कार्यत्वावच्छिन्न-कार्यतानिरूपितकारणताशालित्वम् २१५९

साधुत्वम्—निर्दोषत्वम् *१* अपभ्रंशभिन्नत्वम् *२* अभ्युदयसाधनप्रयोगविषयत्वम् ३ स्वपरकार्यं सा (ध्नो) ध्यतीति।
निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः,
निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते।

साध्यत्वम्—व्याप्तिनिरूपकत्वम्॥२१६४॥

साम-प्रियवचनैः क्रोधोपशमनम् *१* गीति (विशिष्टपं)रूप(८८०१४)मन्त्रः॥

सामग्री—कारणस(मुदायः)मूहः॥२१६७॥

सामयिकाभावत्वम्—उत्पत्तिविनाशवत्वे सत्यभावत्वम्॥ २१६८॥

सामर्थ्यम्—कार्यजननयोग्यत्वम् ॥२१६९

सामवेदः—सामबहुलो वेदः१सामान्वयवक्को वेदो वा २ सामविनियोजको वेदो वा ३ सामद्रव्यको वेदो वेति न्यायसु०।२१७३

सामानाधिकरण्यम्—समानाधिकरणवृत्तित्वम् *१* एकविभक्त्यन्तत्वे सति एकार्थनिष्ठत्वम् ॥ २१७९ ॥

सामानाधिकरण्यसम्बन्धः—भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः, यथा सोऽयं देवदत्तः। घटकलशयोर्वारणायोक्तं भिन्नेति १ भिन्नप्रवृत्तिनिमित्तयोः समानविभक्त्यन्तयोः पदयोरेकस्मिन्नर्थे तात्पर्यम्। मृद्घटः नीलमुत्पलं राज्ञः पुरुष इत्यादिवाक्येषु व्यभिचारनिरासाय क्रमेण विशेषणम्, कुंभाकाशः शरावावच्छिन्नाकाशाद्भिद्यत इति वाक्ये व्यभिचारनिरा-

साय सामानाधिकरण्यपदमिति सदा-
नन्दीयशङ्करदिग्वि० २ तद्द्विविधं मुख्यसा-
मानाधिकरण्यं बाधसामानाधिकरण्यञ्चेति
ल०त० [१९१-२१२ पृ०] द्र० ॥२१७७॥
सामान्यम्-बहुव्यापकम् १ अनुगतधर्मो
वा *२* नित्यमेकमनेकसमवेतम् २१८०
सामान्यतोदृष्टानुमानम्-कार्यकारण-
भिन्नलिङ्गकमनुमानम् १ पूर्वागृहीतव्यक्ति-
सामान्यविषयमनुमानमिति यो० ॥२१८२॥
सामान्यलक्षणसन्निकर्षः-इन्द्रियसंबद्ध-
विशेष्यकज्ञानप्रकारीभूतं सामान्यम् २१८३
सामान्याहङ्कारः-सामान्यतोऽहमित्यभि-
मानात्मिका चित्तवृत्तिः ॥ २१८४ ॥
सारथिः-रथादिघोटकनियोगकर्त्ता २१८५
सावयवत्वम्-अवयवजन्यत्वम् ॥२१८६॥

सिद्धत्वम्–निष्पन्नत्वम् १ निष्पत्तिः–सिद्धिः
सिद्धान्तः–प्रामाणिकत्वेनाभ्युपगतोऽर्थः १ प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासक इति ग्रं० २ स च सर्वतन्त्रप्रतितन्त्रा [१६९ पृ०] धिकरणाभ्युपगमभेदेन चतुर्विधः॥२९०॥
सुखम्–सर्वेषामनुकूलतया वेदनीयम् । स्वदुःखवारणाय सर्वेषामिति १ अन्येच्छानधीनेच्छाविषयत्वे सति भावत्वं सुखत्वम् । भोजनादावतिव्याप्तिवारणायान्येच्छाऽनधीनेतीच्छाविशेषणमिति ग्रं० २ सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेष इति वे० ग्रन्थे ३ इष्टसाधनताज्ञानाजन्यजन्येच्छाविषयगुण इति न्यायग्रन्थे॥२९४॥
सुविचारणाज्ञानभूमिः–गुरुमुपसृत्य वेदान्तवाक्यविचारात्मकश्रवणमननात्मक

वृत्तिः ॥ २१९५ ॥

सुषुप्तिजाग्रत्-सुषुप्त्यवस्थायां सात्वि-की या सुखाकारा वृत्तिः(यदनन्तरं प्रबु-द्धस्य सुखमहमस्वाप्समिति परामर्शः)सा ॥

सुषुप्तिसुषुप्तिः-सुषुप्त्यवस्थायां या तामसी वृत्तिः ( यदनन्तरं गाढं मूढोऽह-मस्वाप्समिति परामर्शः ) सा ॥२१९७॥

सुषुप्तिस्वप्नः-सुषुप्त्यवस्थायां या राज-सी वृत्तिः (यदनन्तरं दुःखमहमस्वाप्समि-ति प्रबुद्धस्य परामर्शः ) सा ॥ २१९८ ॥

सुषुप्त्यवस्था } सम्प्रसादावस्था } जाग्रत्स्वप्नोभयभोगप्रद-कर्मोपरमे सति द्विविध-देहाभिमाननिवृत्तिद्वारा विशेषविज्ञानोपर-मात्मिकाया बुद्धेः कारणात्मनावस्थितिः । मूर्छाप्रलयादिवारणाय विशेष्यदलम् १ सु-

स्वगोचराविद्यागोचराऽविद्यावृत्त्यवस्था ॥

सुहृद्–मत्युपकारमनपेक्ष्योपकारी॥२२०१॥

सूक्ष्म(लिङ्ग)शरीरम्–अपञ्चीकृतपञ्चभूत-कार्यम् १ दृगगोचरत्वे सति कारणदेहभिन्नत्वम्

सूत्रत्वम्–अल्पाक्षरत्वे सति बह्वर्थसूच-कत्वम् १ अल्पाक्षरमसन्दिग्धं न्याय (सा-र) वद्विश्वतोमुखम्, अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः, पार० ॥ २२०५ ॥

सेवा–सर्वभावेनाचार्यानुकूलकारित्वम् ॥

सोपाधिकभेदत्वम्–उपाधिसत्ताव्याप्य-सत्ताकत्वम् ॥ २२०७ ॥

सोपाधिका(भ्रमः)ध्यासः–उपाधिनिरूपणाधीननिरूपणम् ॥ २२०८ ॥

संन्यासः–विहितानां कर्मणां विधिना(न्यासः) परित्यागः । अविहितनिषिद्धत्यागि-

नां वारणाय विहितानामिति, आल-
स्यादिना विहितत्यागिनां वारणाय वि-
धिनेत्युक्तमित्यद्वैतकौ०१ ग्रन्थान्तरे तु वि-
धितो गृहीतानां नित्यनैमित्तिककाम्यश्रौ-
तस्मार्तकर्मणां प्रैषमन्त्रसमुच्चार्य परित्यागः२
कर्मत्यागान्न संन्यासो न प्रैषोच्चारणेन तु,
संन्धौ जीवात्मनोरैक्यं संन्यासःपरिकीर्तितः
३स कुटीचकबहूदकहंसपरमहंसभेदाच्चतु-
र्विधः ल० त०[१५६-३०८ पृ०] द्र० ॥
संयमत्वम्–इन्द्रियनिग्रहत्वम् ॥ २२१२ ॥
संयोगः–विद्यमानयोरप्राप्तयोः प्राप्तिः १
अप्राप्तिपूर्विका प्राप्तिर्वा *१* जन्यद्रव्य-
वृत्तित्वे सति स्वसमानाधिकरणाभावप्रति-
योगिविभागभिन्नगुणः २ संयुक्तव्यवहा-
(रविषयवृत्तिगुणत्वव्याप्यजातिमान् ४)

रासाधारणकारणम् । दण्डादिवारणाय-संयुक्तऽव्यवहारेति, काकादिवारणाया-साधारणेति पु० ॥ २२१७ ॥

संवादः—परस्परं जनानां सम्यङ्निर्णय-पूर्वकं वादो भाषणम् ॥ २२१८ ॥

संवादिभ्रमः—सफलप्रवृत्तिजनको भ्रमः ॥

संशयः—एकस्मिन्धर्मिणि विरुद्ध(भावाभा-वप्रकारकज्ञानम् १)कोटिद्वयावगाहिज्ञानम् २ एकत्र भासमानविरुद्धनानाकोटिकज्ञानं वा। आम्रा वा पनसा वेति समूहालम्बनसंश-येऽव्याप्तिवारणाय एकत्रेति, स्थाणुपुरु-षाविति समूहालम्बनभ्रमेऽतिव्याप्तिवार-णाय भासमानेत्युक्तम्, समूहालम्बनप्र-मायामतिव्याप्तिवारणाय विरुद्धेत्युक्तम् ३ स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यता-

निरूपितप्रतिबन्धकतावच्छेदकीभूतापरको-
टिप्रकारताशालिज्ञानमिति ग्रं० ४ स द्वि-
विधः प्रमाणगतः प्रमेयगतश्चेति ॥२२१३॥

संसर्गाभावः—संसर्गप्रतियोगिकोऽभावः १
तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगि-
ताकाभावो वा ॥ २२२५ ॥

संसारः—स्वादृष्टोपनिबद्धशरीरपरिग्रह इति
कलापटीकायाम् १ मिथ्याज्ञानजन्यसं-
स्काररूपवासनेति पु० २ ज्ञातृज्ञाने च
ज्ञेयञ्च भोक्तृभोग्ये च भोजनम्, कर्त्ता
च करणं कर्म संसारो नवधा भवेत् ॥

संस्कारः—स्वाश्रयस्य प्रागुद्भूतावस्थास-
मानावस्थान्तरापादकोऽतीन्द्रियो धर्म इ-
त्यु०सा० व्या० रामतीर्थः १ आत्मनिशे-
षगुणवृत्तिमूर्त्तवृत्तिवृत्तिगुणत्वव्याप्यजाति-

मान् । घटादिवारणाय गुणत्वव्याप्ये
ति, संयोगादिवारणायात्मविशेषगुण-
वृत्तीति नैयायिकाः ॥ २२२९ ॥
संस्कार्यत्वम्–क्रियाजनिताऽतिशयशालि-
त्वम् ॥ २२३० ॥ [युक्तत्वम् ॥२२३१॥
संस्कृतत्वम्–व्याकरणलक्षणाधीनसाधन-
संहिता–धर्मबोधार्थं रचिता, यथा मनुभा-
रतादि १ सम्यक् हितं प्रतिपाद्यं यस्याः
स्तुतिः–आरोप्यगुणकथनम् १ गुणिनिष्ठ-
गुणाभिधानं वा *२* साक्षाद्विध्यर्थस्य
प्रशंसार्थकं वाक्यमिति मी० ॥२२३५॥
स्तोत्रम्–सामगानविशिष्टमन्त्रकरणकं गु-
णाभिधानम् ॥ २२३६ ॥
स्तोभत्वम्–अर्थशून्यत्वे सत्युच्चारणमा-
त्रप्रयोजनत्वम् ॥ २२३७ ॥

स्त्रीपुंसौ-पद्मिनी चित्रिणी चैव शङ्खिनी-
हस्तिनी तथा, शशो मृगो वृषोऽश्वश्च स्त्री-
पुंसोर्जातिलक्षणम् ॥ २२३८ ॥

स्थायित्वम्-समधिककालवृत्तित्वम् ॥

स्थूलशरीरत्वम्-पञ्चीकृतपञ्चभूतकार्य-
त्वे सति दृग्गोचरत्वम् १ शुक्रशोणितनि- त्वे सति शरीर
र्मितत्वे सत्यस्थ्यादिसमुदायत्वं वा २२४१॥

स्नानम् } शरीरमज्जनम् १ कायप्रक्षाल
मार्जनम् } नं वा ॥ २२४३ ॥

स्नेहः-चूर्णादिपिण्डीभावहेतुर्गुणः *१* द-
र्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा,
यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥

स्पर्शः-त्वगिन्द्रियमात्रग्राह्यो गुणः॥२२४६॥

स्पष्टब्रह्मलिङ्गकत्वम्-विषयवाक्ये ब्र-
ह्मधर्मतया निर्णीतब्रह्मलिङ्गकत्वम्, यथा

ऽन्तरधिकरणविषयवाक्ये ब्रह्मधर्मतया-निर्णीतं सर्वदुरितोदितत्वं फलवचनोपोद्बलेन जीवादावसम्भवेन ब्रह्मण्येव सङ्गमनीयं ब्रह्मधर्मतया निर्णीतं विद्यते इति तदित्यनन्तकृष्णः ॥ २२४७ ॥

स्फोटः-वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थ-प्रत्यायको नित्यः शब्दः ॥ २२४८ ॥

स्मृतिः-चिरानुभूतार्थस्मरणशक्तिः *१* अनुभूतविषयाधिकानवगाहिज्ञानमिति चण्डीटीकायोगमञ्जर्योः २ प्रमाकरणाजन्यत्वे सति संस्कारजन्यज्ञानमिति पु० ३ स्वसमानविषयसंस्कारजन्यं ज्ञानमिति म० ४ स्वाश्रयाश्रितक्रियाजन्यसंस्कारजन्यज्ञानमिति रसमञ्जर्याम् ५ उद्भूतसंस्कारमा-

---

१ उद्भूतसंस्कारेतराजन्यत्वे सति सं-

त्रजन्यं ज्ञानम् । संस्कारध्वंसेऽतिव्याप्ति-
वारणाय ज्ञानमिति, प्रत्यभिज्ञायामति-
व्याप्तिवारणाय मात्रपदम्, अनुभवेऽति
व्याप्तिवारणाय संस्कारजन्यमिति, अस-
म्भववारणायोद्भूतेति ॥ २२८३ ॥

स्मृति(धर्म) शास्त्रम्-वेदार्थस्मरणपूर्वकं-
रचितं शास्त्रम् १ ऋषिप्रणीतत्वे सति वे-
दार्थानुभवजन्यत्वे सति वेदार्थानुवादको-
वा यथा मनुपराशरादिः ॥ २२८५ ॥

स्वत्वम्-शास्त्रसम्मतयथेष्टविनियोगार्हत्वम्॥

स्वगतभेदः-स्वावयवैः कृतो भेदः, यथा
वृक्षस्य पर्णपुष्पफलादितः ॥ २२८७ ॥

स्वतन्त्रत्वम्-कारकान्तरव्यापारानधी-

---

स्कारजन्यत्वमित्यर्थः ।

 (स्वत-

न्त्वे सति कारकत्वम् १ इतरव्यापारा-
नधीनव्यापारवत्त्वं वा ॥ २२५९ ॥

स्वतन्त्रोच्चारणम्—अन्यदीयस्वार्थतात्प
र्यकोच्चारणानधीनोच्चारणम् ॥२२६०॥

स्वतउत्पत्तिकत्वम् } आगन्तुकभावकारणा-
उत्पत्तिस्वतस्त्वम् } नपेक्षज्ञानसामा(मग्री-
जन्यत्वम्) न्यप्रयोजकप्रयोज्यत्वम् १ दो-
षाभावसहकृतज्ञानसामग्री (जन्य) प्रयो-
ज्यत्वमिति पु० २ विज्ञानसामग्रीजन्यत्वे
सति तदतिरिक्तहेत्वजन्यत्वम् । विज्ञान-
सामग्रीजन्यत्वमप्रामाण्येप्यस्तीति परतः प्रा-
माण्यवादिभिश्च स्वीक्रियत इत्यतिव्याप्तिर-
र्थान्तरता वा स्यात् तन्निवृत्त्यर्थं तदति-
रिक्तहेत्वजन्यमित्युक्तमिति तत्त्वप्रदी-
पिकायाम् ॥ २२६१ ॥

स्वतोग्राह्यत्वम्
ज्ञप्तिस्वतस्त्वम् } दोषाभाव (वे सति या) सहकृतयावत्स्वाश्रयग्राहकसामग्री(मात्र) ग्राह्यत्वम् १ यावत्स्वाश्रयग्राहकग्राह्यत्वमिति तत्त्व० २ ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वमिति भाषापरिच्छेदटीकायाम् ॥ २२६६ ॥

स्वतःप्रमात्वम्—आगन्तुकभावकारणानपेक्षज्ञानसामान्यसामग्रीप्रयोज्यत्वम् ॥

स्वतःप्रमाणम्—अन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थम्, यथाऽऽम्नायवाक्यम् ॥

स्वदेशागतत्वम्—स्वाश्रयतावच्छेदकान्यदेशानवच्छिन्नाश्रयताकत्वम् ॥ २२६९ ॥

स्वधा—पितॄद्देशेन द्रव्यत्यागः, यथा श्राद्धादिः

स्वप्नजाग्रत्—स्वप्ने मित्रादिप्राप्तिः॥२२७१॥

स्वप्नसुषुप्तिः—जाग्रद्दशायां वक्तुमशक्यं य-

 (स्वप्रा,

त्किञ्चित्स्वप्नेऽनुभूयते तत् ॥ २२७२ ॥

स्वप्नस्वप्नः-स्वप्नेऽपि स्वप्नोपयाद्दृष्टइति बुद्धिः॥

स्वप्नावस्था-इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति, अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणायान्तःकरणेति १ जाग्रद्भोगप्रदकर्मोपरमे सतीन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविषयतज्ज्ञानावस्था । सुषुप्तावतिव्याप्तिवारणाय जाग्रदादिविशेषणमित्यद्वैतकौ० २ प्रबोधाभावत्वे सति मिथ्यावस्तु (विपरीत)दर्शनत्वमिति पु० ३सा त्रिविधा२२७६॥

स्वप्रकाशत्वम् }
स्वयंज्योतिः } सजातीयप्रकाशाप्रकाश्यत्वम् १ सं (इतराप्रकाश्यत्वे) विदविषयत्वे सति

प्रकाशमानत्वमित्यद्वैतदीपिकायाम् २ स्वा(स्वव्यवहारे स्वातिरिक्त सं०)वच्छिन्न-संविद्नपेक्षत्वमित्यद्वैतसिद्धौ ५ अवेद्यत्वे स-त्यपरोक्षव्यवहारयो(विषय)ग्यत्वम्। घटा-दावतिव्याप्तिवारणायावेद्यत्वे सतीति, अतीन्द्रियधर्मादावतिव्याप्तिवारणायापरो-क्षेत्यादिविशेष्यमिदं लक्षणं बहुपुस्तकेषु दृष्टम् ६ अवेद्यत्वे सत्यपरोक्षव्यवहारयो-ग्यात्यन्ताभावानधिकरणत्वं वा ७ अन्या-नवभास्यत्वे सति स्वव्यतिरिक्तसकला-वभासत्वमिति ग्रं० ॥ २२८३ ॥

स्वभावः–इतरानिरपेक्षं वस्तुस्वरूपम् *१* ज-

---

१ प्रकाशमानत्वम्–स्वसत्तायां स्वसत्ता-प्रकारक संशयाद्यगोचरत्वम्।

२ अवेद्यत्वम्–फलाव्याप्यत्वम्।

न्मान्तरकृतो धर्माधर्मादिशुभाशुभसंस्कारः
स्वरः-काक्वादिकृते वर्णाद्युच्चारणध्वनिवि-
शेषः १ श्रुत्यनन्तरभावीयः शब्दोऽनुरण-
नात्मकः,स्वतो रञ्जयति श्रोतृचित्तं स स्वर
उच्यते, इति रत्नाकरे ॥ २२८७ ॥
स्वरूपयोग्यत्वम्-कारणतावच्छेदकधर्म-
वत्त्वम्, यथा वनस्थितदण्डः ॥ २२८८ ॥
स्वरूपलक्षणम्-इतरानिरूप्यं लक्षणम् १
स्वरूपमेवलक्षणं वा, यथा सत्यज्ञानानन्दाः
२ स्वरूपं सद्व्यावर्तकम्, यथा प्रकृष्टप्रका-
शश्चन्द्र इति ग्रं० ॥ २२९१ ॥
स्वरूपसम्बन्धः-प्रतियोग्यनुयोग्यन्यतरा-
त्मकः सम्बन्धः १ सम्बन्धान्तरमन्तरेण
विशिष्टप्रतीतिजननयोग्यत्वमिति पु० १२९४
स्वरूपासिद्धहेत्वाभासः-पक्षेऽभाववत्त्वम्

स्व(सन्निपत्य)रूपोपकारकाङ्गम्-प्रधान-
साधनद्रव्यादिसंस्कारद्वारा प्रधानोपका-
रकम्, यथा ज्ञानसाधनान्तःकरणसंस्का-
रद्वारा निष्कामकर्मानुष्ठानम् ॥ २२९५ ॥
स्वाध्यायत्वम्-स्वशाखाऽध्ययनत्वम् ॥
स्वामित्वम्-स्वत्वनिरूपितत्वम् *१* प-
रिव्राजकोपाधिमत्त्वम् ॥ २२९८ ॥
स्वारसिकलक्षणा-अधुनातनतात्पर्यविष-
यीभूतार्थनिष्ठालक्षणा ॥ २२९९ ॥
स्वार्थानुमानम्-न्यायाप्रयोज्यानुमानम् ।
स्वार्थानुमितिः-स्वस्य व्याप्यप्रतीत्यनन्त-
रं व्यापकप्रत्ययः ॥ २३०१ ॥
स्वाहा-देवोद्देशेन हविस्त्यागः ॥२३०२॥

---

१ स्वशाखात्वम्-परम्पराध्ययनविषय-
त्वमनुष्ठानविषयत्वं वा ।

स्वीकारः—अस्वस्य स्वस्य कारः क(व्या-
पारः) रणम् ॥ २३०४ ॥

ह

हत्या } प्राणवियोगा (प्रयोजनव्या) नुकू-
हननम् } लव्यापारः ॥ २३०४ ॥

हरिहरः—हरियुक्तो हर इत्यन्योन्यः २३०५

हर्षः—चित्तगतसुखाभिव्यञ्जिकामुखविका-
शादिहेतुर्धीवृत्तिः ॥ २३०६ ॥

हवनम्—देवाद्युद्देशेन मन्त्रपूर्वकं वह्नौ हविः-
प्रक्षेपः ॥ २३०७ ॥

हास्यम्—विकृतवेषवाक्चेष्टादिदर्शनजन्यसु-
खविशेषो रदविकाशादिहेतुः ॥२३०८॥

हिन्दुः—हीनं दूषय(व)ति दूषत्वामिति मेरु-
तन्त्रे ॥ २३०९ ॥

हिरण्यगर्भः—समष्टिसूक्ष्मकारणशरीरोप-

हितं चैतन्यम् १ अपञ्चीकृतभूतकार्यसम-
ष्टिसूक्ष्मशरीरोपहितत्वमिति ग्रं० ॥२३११
हिंसा–प्राणिवृत्तिच्छेदः *१* अविधिपूर्व-
कं प्राण्युपघातः ॥ २३१३ ॥
हेतुः–तृतीयान्तं पञ्चम्यन्तं वा, यथा धूमेन
धूमाद्वेति १ साध्यविषयकज्ञानजनकवचन-
मिति ग्रं० २ प्रतिज्ञावाक्यधीजन्यकारणा-
काङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्य
त्वमिति चिन्तामणौ ३ स द्विविध उत्पा-
दकं ज्ञापकञ्च । मृदो घटो जायत इत्यादौ
उत्पादकत्वम्, पर्वतो वह्निमान् धूमादित्या-
दौ ज्ञापकत्वम् ॥ २३१६ ॥
हेत्वाभासः–अनुमितितत्करणान्यतरमति-
बन्धकयथार्थज्ञानविषयः १ पञ्चरूपोपपन्न-
त्वाभावे सति तद्रूपेण भासमान इति गौ०

सूत्रवृत्तौ २ अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति दीधि०

हेयत्वम्–हानक्रियाविषयत्वम् ॥२३३०॥

होमः–देवतोद्देशेन (द्रव्यस्याग्नौ प्रक्षेपः) वह्नौ मन्त्रद्वारा घृतादित्यागः १ अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापार इति दिनकर्याम् ॥ २३२२ ॥

हंससंन्यासी-शिखावर्जं यज्ञोपवीतशिक्यैकदंडकमंडलुधरःग्रामैकरात्रकृच्छ्रचान्द्रायणपरः

ह्रीः-अकार्यप्रवृत्त्यारंभप्रतिबन्धिकालोकलज्जा।

सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं,
सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः।
कथमपि सती पूता सद्यस्तया विषयीकृता,
मम कृतिरियं हित्वा दोषान्भवत्वतिसद्गुणा १
स्थितानि ग्रन्थेषु प्रकटमुपदिष्टानि गुरुभिः,
गुणो वा दोषो वा न मम परवाक्यानि वदतः।

परन्त्वस्मिन्नस्ति श्रमफलमिदं यन्निजधिया,
श्रुतीनां युक्तीनामकलि गुरुवाचां च विषयः॥२॥
सिद्धान्तरीतिषु मया भ्रमदूषितेन,
स्यादन्यथातिलिखितं यदि किञ्चिदस्थ ।
संशोधने सहृदयास्सदया भवन्तु,
सत्सम्प्रदायपरिशीलननिर्विशङ्काः ॥ ३ ॥
प्रमादलिखितं त्यक्तं प्रमादालस्यदोषतः ।
तत्क्षन्तव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ४
यदत्र स्खलितं किञ्चित्प्रमादेन भ्रमेण वा ।
तत्सर्वं शोधयन्त्वार्याः कस्य न स्खलितं मनः ॥५
गच्छतः स्खलिनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधाति सज्जनाः ॥६॥
बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया ।
परिगृह्णन्त्वदो विज्ञा ऋजवो दम्भवर्जिताः ॥७॥
क्षणमात्रं न तिष्ठ(न्ति)मि विना पुस्तकमन्यथा
मुक्त्वाग्रन्थादिकं चित्तं क्षणमात्रमसंस्थितम् ।
क्वाचिन्मुद्रयितुर्दोषाः क्वचिद्योजयितुस्तथा ।
पतिताः शोधनीयास्ते कृपया विदुषां गणैः॥९॥
इति केनचिद्भिक्षुगौरीशङ्करेण संगृहीतः ॥

# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहस्थावान्तर-वर्त्तिलक्षणानामकारादिक्रमेणानुक्रमणिका

इति ॥

